श्रीश्रीमन्नरैन्द्रान् सकलहितकरान् क्षात्रधर्म्मैप्रदीप्तान्
नेपालेशान्प्रजानां निखिलभयहरान् सर्वसौभाग्यदातॄन् ॥
राणानाथान् वरेण्या नपरपशुपतीन् जुद्धशम्शेरदेवान्
नत्वाभक्त्या मयेतद्विरचितमधुना सूक्ष्मग्रन्थाभिधानम् ॥



His Highness,
THE MAHARAJAH of NEPAL.



Major General,
Dhana Shumshere Jung Bahadur Rana.

॥ ॐ ॥

॥ अथ ॥

# ॥ प्रस्तावना ॥

॥ श्रीगणेशाय नमः ॥

वागर्थप्रतिपत्तये निजगुरुं श्रीस्वेष्टदेवीं पराम्
नत्वा विघ्नहरं महागणपतिं श्रीशारदां वाक्प्रदाम् ॥
श्रीनाथादिगुरून् प्रणम्य मनसा श्रीमन्त्रराजं परम्
श्रीमच्छ्रीकुलदेवतोपचितये प्रस्तूयते प्रक्रमः ॥१॥

नत्वा पूर्व्वं प्रसिद्धान् स्वजनकचरणान् रुद्रशम्शेरदेवान्
श्रीश्रीश्रीमन्महार्हान् स्वजनकजनकान् वीरशम्शेरपादान्
अप्येषामार्य्यपादान् जगति सुविदितान् धीरशम्शेरदेवान्
मन्दोऽपि श्रीपरायाश्चरणकमलयोर्वैभवं संस्तवीमि ॥२॥

भोः विद्वद्वृन्दारकाः !

सकलविद्याधिदेवतायाः श्रीमन्महात्रिपुरसुन्दर्याश्चरणकमलचञ्चरीकायमाणस्य श्रीचक्राधिराजस्य सपर्यापर्यायभूतं श्रीपराविभूतिस्तोत्रं यथामनीषं निर्माय तत्र भवतां विविक्तदृशां दृग्गोचरी कर्त्तुमुपहृतवानस्मि ॥ कुतोऽस्माकं

## प्रस्तावना

सहृदयहृदयाह्लादजनसुभगं नवीनं वस्तु समुन्मील्य स्तोतुं कौशलम्? केवलं गुरुभिः करुणार्द्रहृदयै रुदीरितानि वचनानि लेशतो वधार्यं सकलविद्याधिदैवतभूतश्रीमन्महात्रिपुरसुन्दरीमन्त्रचक्रावरणपूजाक्रमाध्यवसायं स्वचेतसि दृढीकृत्य स्थापयितुं गुणनिकामात्रं कृतवानस्मि ॥ ततो भवतां कारुणिकनयनारविन्दामन्दमकरन्दनिर्मृष्टरजोविमलमिदं स्यादित्याशास्ते ॥

प्रार्थयिता
धनशम्भोरः

॥ ॐ ॥

॥ अथ ॥

## ॥ मङ्गलाचरणम् ॥

॥ ॐ नमो वागीश्वराय ॥

समस्तभुवनोदयस्थितिलयात्मलीलाशतै-
र्विनोदनसमुद्यतः परमहेश्वरो हंसगः ॥
प्रकाशवदनाम्बुजः सकलमन्त्रतत्वात्मको
विमर्शपरमास्पदस्थितपरान्तरः पातु नः ॥ १ ॥

अन्वयः—समस्तभुवनोदयस्थितिलयात्मलीलाशतैः विनोदनसमुद्यतः हंसगः प्रकाशवदनाम्बुजः सकलमन्त्रतत्वात्मकः विमर्शपरमास्पदस्थितपरान्तरः परमहेश्वरः नः पातु ॥

व्याख्या—समस्तस्य सकलस्य भुवनस्य लोकस्य उदयस्थितिलयात्मनि सृष्टिरक्षानाशात्मनि यानि लीलाशतानि तैः ॥ उदयादित्रितयं तिरोधानानुग्रहयोरप्युपलक्षणम् यथा त्रिवृत्करणं पञ्चीकरणस्य ॥ एतत्पञ्चविधकृत्यप्रचुरैः विलासशतैः विनोदनसमुद्यतः ॥ विनोदनम् क्रीडनम् तस्मिन् समुद्यतः जागरूक प्रसरद्रूपाया विमर्शमय्याः संविदो झगित्युच्छलात्मकपरप्रतिभोन्मज्जने सावधान इत्यर्थः ॥ अत्र समस्तशब्दविशेषितभुवनपदेन शिवादिक्षित्यन्तं तत्वजातमुच्यते ॥ सर्वेषां तत्वानां ब्रह्मण उत्पत्तेः तत्रैव स्थितेर्लयाच्च ॥ हंसगः हंसः जीवः तस्मिन् गच्छति इति हंसगः सकलजीवस्य साक्षी प्रकाशकः

न केवल सृष्टिदशायां निजशक्तिप्रचयोऽस्य विश्वम् तत्पृष्टपातिनौ स्थितिलयावपि क्रियाशक्त्याभासितस्य विश्वस्य तत्तत्प्रमात्रपेक्षं कञ्चित्कालं वहिर्मुखतावभासनरूपा या स्थितिः चिन्मयप्रमातृविश्रान्त्यात्मा च यो लयः तावेतावपि स्वशक्तिप्रचयः एव सोऽपि हंसे अहन्ताच्छादितत्वेन स्फुरतीत्यर्थः॥ प्रकाशवदनाम्बुजः प्रकाशो नाम इच्छामि जानामि करोमि इत्युत्तमपुरुषान्तर्गतस्फुरणरूपोऽहमिति विमर्श उच्यते स एव प्रकाशो वदनाम्बुजं (वक्त्रपद्मं) यस्य सः प्रकाशवदनाम्बुजः॥ यथा पुरुषः प्रथमं मुखदर्शनात्प्रतीतिमारोहते तथा परमहेश्वरोऽपि प्रथमं विमर्शादेव प्रतीतिमारोहते ॥ परमहेश्वरप्रतीतौ प्रकाशो मुखत्वेन (द्वारत्वेन) अध्यवस्यते ॥ स चाहमित्यात्मको विमर्शः शब्दात्मको भूत्वा परमहेश्वरस्य मुखतया विश्राम्यतीति भावः॥ तत्प्रकारं परिदर्शयामि ॥ सकलमन्त्रतत्वात्मक इति॥ अकारः (अनुत्तरस्य परामर्शकः) ॥ हकारः ( अनुत्तरस्यैव अनाहतरूपेण किञ्चित्स्थूलरूपतामापन्नस्य परामर्शकः )॥ मकारः ( अनुत्तरानाहतयोर्विश्रान्तिधाम्नः परामर्शकः )॥ तथाच अनुत्तरानाहतावभासविश्रान्तत्वेन शब्दराशिस्फारात्मकपराहन्ताविमर्शस्वरूपस्य महामन्त्रस्य स्वात्मस्वरूपतया स्फुरणमहमिति विमर्श उच्यते ॥ स एव विमर्शः सकलानां मन्त्राणां तत्वम् ( रहस्यम् ) तदात्मकः अनेनेदमुक्तं भवति ॥ अनाख्यपरामर्शात्मा अनुत्तरः शिवशक्त्यादिप्रतिनियतव्योपदेशासहिष्णुः परप्रकाश एव परं तत्वम् ॥ सच स्वातन्त्र्याद्विश्वमवविभासयिषुः शिवशक्तिरूपतामवभासयति ॥ तस्य शिवलक्षणस्य तत्वस्य अव्यभिचरितस्वभावा पूर्णाहन्तात्मा अनुत्तराकुलस्वभावा शक्तिरन्तर्विमर्शनेन अनुत्तरे एव सकलं विश्वं विश्रान्तं दर्शयति वहिर्विमर्शनेन तु कादिमान्तं पञ्चकपञ्चकं सर्ववर्णमूलभूताभ्यः अइउऋऌशक्तिभ्यः पुरुषान्तं समस्तं प्रपञ्चयन्ती सर्वसृष्टिपर्यन्तवर्त्ति परिपूर्णं अमृतवर्णं अनुत्तरशक्त्याप्यायितानाहतमयं प्राणबीजं ततोऽनुत्तरानाहतयोर्विश्रान्तिधाममवर्णमाभासयति ॥ तथाच परप्रकाशो मन्त्राणां परं तत्वं स एव महेश्वर इति॥ उक्तमेवार्थं पुनर्विसदयामि ॥ विमर्शपरमास्पदस्थितपरान्तर इति ॥ पूर्णाहं विमर्शपरमास्पदतया स्थितः प्राणपुर्यष्टकनियन्त्रितत्वेन प्रतिष्ठामापन्नो यो जीवस्तस्मात् परः श्रेष्ठः अन्तरोऽन्तरात्मा परमहेश्वरः परब्रह्म नः चराचरप्राणिनः पातु रक्षतु ॥



## तत्र शास्त्रवचनप्रमाणम्

"स तु योऽन्तर्मुखो भावः सर्व्वज्ञादि गुणास्पदः ।
तस्य लोपः कदाचित् स्यादन्यस्यानुपलम्भनात् ॥ "इति स्वच्छन्दवचनम् ॥

"स्वरूपज्योतिरेवान्तः परावागनपायिनी ॥ " इति आगमवचनम् ॥

"यथोर्णनाभिः सृजते गृह्णतेच तथाक्षरात्सम्भवतीह विश्वम् ॥"

इति श्रुतिवचनम् ॥

"सर्वान् लोकान् संभक्षः संभक्षयति अजस्रं सृजति विसृजति वासयति तस्मादुच्यते महेश्वरः ॥" इति शिरःश्रुतिवचनम् ॥

॥ इति मङ्गलाचरणम् ॥



॥ ॐ ॥

॥ अथ ॥

# ॥ श्रीपराविभूतिस्तोत्रम् ॥

॥ ॐ नमः श्रीपरदेवतायै ॥

स्वानन्दलीननिरुपाकृतिभूतदेहा
कामेश्वरी जयति सा परशक्तिराद्या ॥
बीजञ्चराचरमयं परमो विमर्शः
संशुद्धकः परशिवाकृतिदर्पणश्च ॥ १ ॥

अन्वयः—स्वानन्दलीननिरुपाकृतिभूतदेहा सा आद्या परशक्तिः चराचरमयं बीजं संशुद्धकः परशिवाकृतिदर्पणः परमः विमर्शः च कामेश्वरी जयति ॥

व्याख्या—अन्तःपूर्णाहन्तायां स्वप्रकाशे आनन्दे एव लीनो निरूपाकृतिभूतो देहो यस्याः सा ॥ स्वप्रकाशानन्दावस्थायां हि विशेषाभावनात् अशेषविश्वाभेदचमत्कारस्य च विशिष्य प्रकाशासंभवात् निरुपमो निर्विशेषश्च देहः स्वरूपं यस्याः ॥ तादृशी आद्या आदिकारणीभूता परशक्तिः ब्रह्मशक्तिः । कामेश्वरी काम्यते अभिलष्यते स्वात्मत्वेन परमार्थविद्भिर्महायोगिभिरिति

कामः स एव परब्रह्म तस्येश्वरी कामेश्वरी श्रीमन्महात्रिपुरसुन्दर्याः नामभेदः "प्रकाशश्च विमर्शश्च स्पन्दः सत्ता चितिः क्रिया। स्फुरत्तेति समाख्याता सा वै त्रिपुरसुन्दरी ॥" इति ॥ भावौन्मुख्य, तदभिष्वङ्ग, तदन्तर्मुखी भावनामयानां सृष्टिस्थितिलयशब्दोदितानां प्रधानं त्रिचमत्कृतित्वेन आनन्दघनं तुर्य्याख्यं पदं संवित्प्रकाशं बिभ्रती अपि संशुद्धा महात्रिपुरसुन्दरीत्याख्यायते ॥ अतएव चराचरमयं बीजं स्थावरजङ्गमादिकारणं परमः श्रेष्ठः विमर्शश्च परशिवस्वरूपप्रदर्शने दर्पणः आदर्शश्च सती जयति सर्वोत्कर्षेण वर्त्तते ॥ परशिव एव ब्रह्म ॥

भावार्थः—श्रीमन्महात्रिपुरसुन्दरी चराचरजगत्कारणभूता परशिवस्य प्रतिफलनरूपदर्पणस्वरूपविमर्शरूपेण सर्वोत्कर्षेण वर्त्तते ॥

अभिप्रायः—यथा शिवस्य शक्त्या विना जगन्निर्मातृत्वं न संभवति, तथा परशक्तेरपि परशिवेन विना कारणत्वं न संभवति ॥

## तत्र शास्त्रवचनप्रमाणम्

"यदा सा परमा शक्तिः स्वेच्छया विश्वरूपिणी।
स्फुरत्तामात्मनः पश्येत्तदा चक्रस्य संभवः ॥
यथा न्यग्रोधबीजस्थ शक्तिरूपो महाद्रुमः।
तथा हृदयबीजस्थं जगदेतच्चराचरम् ॥" इति

आगमवचनम् ॥

"शक्त्या विना शिवे शुष्के नाम धाम न विद्यते।
शिवं विना चित्कलानां कलात्वं न क्वचिद्भवेत् ॥



बीजाङ्कुरन्याययोगाच्छिवशक्त्यात्मकं महः।
सदा जागर्त्ति देवेशि नानारूपाणि दर्शयेत् ॥" इति

शक्तिसंगमतन्त्रवचनम् ॥

॥ १ ॥

**शक्तिः परात्परतरा शिवशक्तियोगा–**
**देवी स्फुटात्प्रजनिताङ्कुरबीजरूपा ॥**
**सा श्रीरनुत्तरविमर्शमयाक्षलक्ष्या**
**साक्षादणोरणुतरा जगतीह भाति ॥ २ ॥**

अन्वयः— स्फुटात् शिवशक्तियोगात् प्रजनिताङ्कुरबीजरूपा परात्परतरा शक्तिः अनुत्तरविमर्शमयाक्षलक्ष्या सा देवी श्रीः इह जगति अणोः अणुतरा भाति ॥

व्याख्या —स्फुटात् व्यक्तात् ॥ शिवः प्रकाशः शक्तिः विमर्शः तयोः संयोगः तस्मात् ॥ प्रजनिते अङ्कुरश्च बीजश्च येन, तदेव रूपं स्वरूपं यस्याः सा ॥ परात्परतरा मनोवागगोचरा शक्तिः विष्णुमाया ॥ अनुत्तरलिपिः अकारः विमर्शलिपीः हकारः अतएव अनुत्तरश्च विमर्शश्च तन्मयौ अक्षौ अक्षरौ ताभ्यां लक्ष्या ( लक्ष्य बीग्रहस्वरूपं यस्याः सा ) ॥ अनुत्तरविमर्शमयाक्षलक्ष्या अहमात्मिका अतएव अन्तर्गर्भितसमस्तवर्णकदम्बका अकारादिहकारान्तपञ्चाशदक्षररूपिणी वर्णपदमन्त्रकलातत्वभुवनात्मकसमस्तप्रपञ्च जनयित्रीति भावः ॥ सा देवी साक्षात् श्रीः ( श्रीमन्महात्रिपुरसुन्दर्याः नामभेदः ) ॥ अणोः सूक्ष्मात् अणुतरा सूक्ष्मतरा इह अत्र जगति विश्वगोले भाति प्रकाशते ॥

## तत्र शास्त्रवचनप्रमाणम्

"न शिवेन विना देवी न देव्या च विना शिवः ।
नानयोरन्तरं किञ्चिचन्द्रचन्द्रिकयोरिव ॥" इति
"अणोरणुतरादेवी महतोऽपि महीयसी ॥" इति च
आगमवचनम् ॥

"ब्रह्म वा इदमग्र आसीत् ॥ तदात्मानमेव वेद अहं ब्रह्मास्मि ॥" इति "अ इति ब्रह्म तत्रागतमहम् ॥" इति च कण्वश्रुतिवचनम् ॥

॥ २ ॥

**आदर्शके परशिवार्ककराग्रपुञ्जे ।**
**स्वच्छे विमर्शमयके प्रतिबिम्बभूते ॥**
**दिव्येमनोहरतमे निकटस्थकुड्ये**
**चित्तातपे निविशते सुतरां सुबिन्दुः ॥ २ ॥**

अन्वयः—परशिवार्ककराग्रपुञ्जे स्वच्छे विमर्शमयके आदर्शके प्रतिबिम्बभूते (सति) ॥ दिव्ये मनोहरतमे चित्तातपे निकटस्थकुड्ये सुतरां सुबिन्दुः निविशते ॥

व्याख्या—परशिवः प्रकाशैकस्वभावः परशिवभट्टारक एव अर्कः दिनकरः तस्य कराः किरणाः तेषां अग्राः अग्रभागाः तेषां पुञ्जः निकरः तस्मिन् ॥ स्वच्छे कलङ्करहिते शुद्धे विमर्शमयके अनवधिकारविस्फुरण-शक्तिमये एवं आदर्शकस्य विशेषणम् ॥ आदर्शके दर्पणे ॥ प्रतिबिम्बभूते



स्वरूपालोकनकृते ॥ अत्र भावे सप्तमी प्रयोगः ॥ चित्तस्य आतपे तेजःपुञ्जे ॥ कुड्ये अत्र चित्तस्य कुड्यत्वेन निरूपणम् ॥ चित्तातपे ज्ञानैकस्वरूपे ॥ सुबिन्दुः महाबिन्दुः ॥ निविशते आविर्भवति ॥

अभिप्रायः—लोकोऽपि सूर्याभिमुखस्थितदर्पणतले सूर्यकिरणप्रतिफल-नान्तरं निकटगतकुड्ये सूर्यकिरणप्रतिपादिततेजोबिन्दुः प्रत्यक्षं प्रतिपद्यते ॥ तद्वत् प्रकाशरूपपरमेश्वरस्य दर्पणवत् स्वरूपविमर्श सम्बन्धे जाते सति तदानीं तत्र महाबिन्दुः पूर्णोऽहमित्येवं रूपः परमेश्वरोऽवभासते ॥

## तत्र शास्त्रवचनप्रमाणम्

"स्फुरत्तामात्मनः पश्येत्तदा चक्रस्य सम्भवः ॥" इति आगमवचनम् ॥
" सास्फुरत्ता महासत्ता देशकालविशेषिणी ।
सैषा सारतया चोक्ता हृदये परमेष्ठिनः ॥" इति प्रत्यभिज्ञावचनम् ॥
"सदेव सौम्येदमग्र आसीत् ॥ एकमेवाद्वितीयं ब्रह्म तदैक्षत सेयं देवतैक्षत ॥" इति श्रुतिवचनम् ॥

॥ ३ ॥

**स्पष्टाहनिःसमरसाकृतितत्वदेहो-**
**ऽहङ्कार एव किल चित्तमयात्मरूपः ॥**
**बीजाङ्कुराख्यशिवशक्तिजबीजपिण्डा-**
**लोकत्रयेऽस्तिकवलीकृतसर्ववर्गः ॥ ४ ॥**

अन्वयः—स्पष्टाहनिःसमरसाकृतितत्वदेहः किल चित्तमयात्मरूपः बीजाङ्कुराख्यशिवशक्तिजबीजपिण्डः अहङ्कारः एव लोकत्रये कवलीकृत-

सर्ववर्गः अस्ति ॥

व्याख्या— स्पष्टौ सुव्यक्तौ परस्परोद्भूतरूपौ, अश्च हश्च अहौ, तयोः निःसमरसा एकलोलीभूता आकृतिः आकारः समरसाकृत्या सतत्वो देहो यस्याः सा ॥ चित्तमयं चित्तप्रचुरम् आत्मस्वरूपं यस्य सः ॥ बीजाङ्कुरेण आख्याताभ्यां विख्याताभ्यां शिवशक्तिभ्यां प्रकाशविमर्शाभ्यां जातस्य बीजस्य कारणस्य पिण्डः ॥ भूर्भुवःस्व इति लोकत्रयं तस्मिन् ॥ कवलीकृताः अन्तस्थापिताः सर्ववर्गाः स्थावरजङ्गमाः येन सः ॥

अभिप्रायः— प्रत्याहारन्यायेन अन्तर्गर्भितसमस्तवर्णकदम्बकाहङ्काररूप प्रकाशविमर्शसंपुटत्वादेव शब्दार्थात्मकसर्व्वप्रपञ्चविकाशो भवति ॥

## तत्र शास्त्रवचनप्रमाणम्

" प्रकाशस्यान्त विश्रान्तिरहं भावोहि कीर्त्तितः ॥ " इति आगमवचनम् ॥

" एको वर्णो वहुधा शक्तियोगाद्वर्णननेकान् निहितार्थो दधाति ॥" इति श्रुतिवचनम्

॥ ४ ॥

शुक्लारुणोद्भवमहापरबिन्दुयुग्मम्
श्रीमत्परापरमयं शिवशक्तिरूपम् ॥
वागर्थसृष्टिरचनाकरणस्यहेतो-
रन्योन्यमिश्रितविभिन्नवपुःस्वरूपम् ॥ ५ ॥
सोमाग्निसूर्य्यसमरूपकलात्मकश्चा–
हङ्कारतत्वनिलयोद्भवबिन्दुयुग्मम् ॥



कामो दिवाकरशरीरधरः कला च
सा कामनीयकतया दहनेन्दुरूपा ॥ ६ ॥

अन्वयः—श्रीमत्परापरमयं शिवशक्तिरूपम् शुक्लारुणोद्भवमहापरबिन्दुयुग्मम् वागर्थसृष्टिरचनाकरणस्यहेतोः अन्योन्यमिश्रितविभिन्नवपुःस्वरूपम् (भवति) ॥ ५ ॥ सोमाग्निसूर्यसमरूपकलात्मकं अहङ्कारतत्वनिलयोद्भवबिन्दुयुग्मम् च (अस्ति) ॥ दिवाकरशरीरधरः कामः सा कामनीयकतया दहनेन्दुरूपा कला च (स्तः) ॥ ६ ॥

व्याख्या— श्रीमत्परापरमयं प्रकृतिपुरुषात्मकम् ॥ शिवशाक्तरूपं प्रकाशविमर्शात्मकं ॥ शुक्लोद्भवमहाबिन्दुः शुभ्रबिन्दुः अरुणोद्भवपरबिन्दुः रक्तबिन्दुः तयोः युग्मं युगलम् ॥ वाक् च अर्थश्चःतयोः सृष्टिः उत्पतिः तस्य रचना कल्पना तस्याः करणं सम्पादनम् तस्य हेतोः अभिप्रायेण ॥ अन्योन्यं मिश्रितेच अन्योन्यं विभिन्ने च ते वपुषी एव स्वरूपं यस्य तत् ॥ अतएव मिश्रबिन्दुः संभूतः इत्यर्थः ॥ ५ ॥ सोमः चन्द्रः अग्निः वह्निः सूर्यः रविः तेषां समरूपं तस्य कला एव आत्मा यस्य तत् ॥ सोमस्य अमृतादि–षोडशकलाः अग्नेः धूम्रार्चिषादिदशकलाः सूर्य्यस्य तपिन्यादिद्वादशकलाः ॥ काम्यते स्वात्मत्वेन योगिभिः यः सः कामः प्रकाशरूपेश्वरः दिवाकरशरीर–धरः सूर्य्यकलात्मकः मिश्रबिन्दुरूपः ॥ कामनीयकतया स्पृहणीयतया ॥ कलाविमर्शशक्तिः ॥ दहनेन्दुरूपा अग्निकलात्मकरक्तबिन्दुसोमकलात्मकश्वेतबिन्दु स्वरूपा ॥ अहङ्कारतत्वनिलयोद्भवं अन्तर्गर्भितसमस्तराशिः वर्णात्मकम् ॥ ६ ॥

अभिप्रायः—अग्निसोमरूपिणो विमर्शशक्तिः महात्रिपुरसुन्दरी बिन्दुसमष्टि–रूपा कामकलेत्युच्यते सैवोपाश्यतया सर्व्वागमेषूद्वुध्यते ॥ परमेश्वरः स्वङ्गभू

तनिखिलप्रपञ्चविलयात्मकविमर्शशक्तिमनुप्रविश्य बिन्दुभाव मयते ॥ ततः सा विमर्शशक्तिरपि स्वान्तर्गतप्रकाशमयबिन्दुमनुप्रविशति ॥ ततश्च बिन्दुरुच्छूनो भवति ॥ तस्माद्बिन्दोर्नादात्मिका समस्ततत्वगर्भिणी तेजोमयी बीजरूपा वालाग्रवत्सूक्ष्मरूपिणी निर्गतय श्रृङ्गाटरूपतामुद्वहते ॥ एवं च बिन्दुनादस्वरूपयोस्तयोः प्रकाशविमर्शयोरहमितिशरीरं भवति ॥ एवं द्विरूपयोस्तयोर्मध्ये एको विमर्शो रक्तबिन्दुरूपतां भजते ॥ अपरः प्रकाशः शुक्लबिन्दुभावमेति ॥ उभयोर्मेलने मिश्ररूपं सर्वतेजोमयं परमात्मस्वरूपं भवति ॥

## तत्र शास्त्रवचनप्रमाणम्

" या परा सा विष्णुमाया यः परः स महेश्वरः ॥" इति
अतिरहस्यतन्त्रवचनम् ॥

" वर्णः कलापदं तत्वं मन्त्रो भुवनमेवच ॥
इत्यध्वषट्कंदेवेशि भातित्वयि चिदात्मनि ॥" इति
आगमवचनम् ॥

" हिरण्यश्मश्रुः हिरण्यकेश आप्रणख्यात्सर्व एव सुवर्णः ॥" इति
" सपर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् ॥"
इति च श्रुतिवचनम् ॥

" बिन्दुरूपस्य चक्रस्य स्थुलवर्णक्रमेणतु ।
अर्द्धेन्दुबिन्दुनादान्तशून्योच्चाराद्भवेच्छिवः ॥" इति
विज्ञानभट्टारकवचनम् ॥

"शुक्लः शिवो रक्तशक्त्यां पराशम्भववेधतः ।
रक्तशाम्भवरूपेण परातत्वेन शक्तितः ॥



रक्तः शिवोशुक्लशक्त्यां सच्चिदानन्दलक्षणम् ॥" इति

" अग्रबिन्दुपरिकल्पिताननामन्यबिन्दुरचितस्तनद्वयीम् ।
नादबिन्दुरचनागुणास्पदां नौमि ते परशिवे परां कलाम् ॥" इति

"एकारोर्द्ध्वगतो बिन्दुर्मुखं भानुरधोगतौ ।
स्तनौ दहनशीतांशू योनिर्हार्द्धकला भवेत् ॥
बिन्दुं संकल्प्यवक्त्रन्तु तदधस्तात्कुचद्वयम् ॥
तदधः स परार्द्धन्तु चिन्तयेत्तदधोमुखम् ॥" इति च
आगमवचनम् ॥

॥ ५ ॥ ॥ ६ ॥

**संशुद्धयन्त्रसुमनुक्रमविस्तरात्मा**
**निर्वाणमूर्त्तिरिति कामकलाख्यविद्या ॥**
**सेयं च येन विदिता भवतीह लोके**
**मुक्तः स वै त्रिपुरसुन्दरिकास्वरूपः ॥७॥**

अन्वयः—सा इयम् कामकलाख्यविद्या संशुद्धयन्त्रसुमनुक्रमविस्तरात्मा निर्वाणमूर्तिरिति येन विदिता स वै इह लोके मुक्तः [सन्] त्रिपुरसुन्दरिकास्वरुपः भवति ॥

व्याख्या—कामकलाख्यविद्या पूर्वोक्तमहाप्रबन्धेन व्याख्याता कामकलेति नाम्नाख्याता महात्रिपुरसुन्दरी ॥ संशुद्धयन्त्रं श्रीयन्त्रं सुमनवः सर्वाम्नायोक्तमन्त्रभेदाः तेषां क्रमविस्तरः आत्मा यस्याः सा ॥ संशुद्धयन्त्रसुमनुक्रमविग्रहात्मा चक्रमन्त्रदेवतात्मना सर्व्वानन्दमयादिसमस्तप्रकटनपर्यन्तस्वरूपाः ॥ निर्वाणमूर्त्तिः सच्चिदानन्दरूपिणी ॥ विदिता ज्ञाता ॥ इहलोके पृथिव्याम् ॥

अभिप्राय:— येन शक्तिपातात् ब्रह्मजिज्ञासुना भावयता पुरुषेण गुरूपासनादिना इयमवगता स पुरुषो मुक्तो भवति ॥

## तत्र शास्त्रवचनप्रमाणम्

"ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्यामन्यते किमुतद्ब्रह्मावेद्यस्मात् तत् सर्वमभवत् ॥" इति बृहदारण्यकवचनम् ॥

"स वा एष एवं पश्यन्नेवं मन्वान एवं जानन्। आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्द: स एव भवति ॥" इति ॥ "परंधाम त्रैपुरं चाविशन्ति ॥" इति "ब्रह्मविद्ब्रह्मैव भवति ॥" इति च श्रुतिवचनम् ॥

"यदा त्वेकत्रसंरूढ़स्तदा तस्यलयोदयौ ।
नियच्छन् भक्तितामेति ततश्चक्रेश्वरो भवेत्॥":इति
स्वच्छन्दशास्त्रवचनम् ॥

"क्रमपूर्णो महेशानि क्रमाच्छम्भुर्भविष्यति ॥" इति
तन्त्रचिन्तामणिवचनम् ॥

॥ ७ ॥

**व्यक्तोध्वनिस्त्रिभुवने स्फुरितात्सुनाद-**
**ब्रह्माङ्कुरोऽरुणकलात्मकपूर्णबिन्दोः ॥**
**तस्माद्रवाच्च जनितं हि खवायुतेजः-**
**क्षीरस्थिरानिवहविग्रहवर्णतत्वम् ॥ ८ ॥**

अन्वय:—त्रिभुवने सुनादब्रह्माङ्कुर: ध्वनि: स्फुरितात् अरुणकलात्मकपूर्णबिन्दो: व्यक्तः ॥ तस्मात् रवात् च खवायुतेजःक्षीरस्थिरानिवहविग्रहवर्णतत्वम् हि जनितम् ॥



व्याख्या—त्रिभुवने त्रैलौक्ये ॥ सुनादे सर्व्वशब्दोत्पत्तिहेतु: स एव ब्रह्म नादब्रह्म अङ्कुर: उत्पादकं यस्य स: ॥ ध्वनिः शब्द: ॥ स्फुरितात् पूर्व्वोक्तलक्षणेनोच्छूनात् ॥ अरुणकलात्मकपूर्णबिन्दो: रक्तबिन्दोः ॥ व्यक्त: संजात: ॥ रवात् शब्दात् ॥ खं आकाश: वायु: पवन: तेज: रश्मि: क्षीरं जलं स्थिरा पृथ्वी तेषां निवहा: विग्रहा: वर्णा: अक्षरा: तेषां तत्वम् खवायुतेजःक्षीरस्थिरानिवहविग्रहवर्णतत्वम् पञ्चमहाभूतानां वर्णानां आदिक्षान्ताक्षराणां तत्वं ॥ जनितं सञ्जातम् ॥

अभिप्राय:—रक्तबिन्दुजनादब्रह्माङ्कुरशब्दात् पञ्चमहाभूतानां वर्णानामादिक्षान्ताक्षराणां तत्वं जनितम् ॥ अतएव नादबिन्दोरेव सर्व्वप्रपञ्चनिष्पत्तिर्भूत् ॥

## तत्र शास्त्रवचनप्रमाणम्

"एको नादात्मकोऽवर्ण: सर्व्ववर्ण विभागवान् ।
सोऽनस्तमितरूपत्वादनाहत इति श्रुत: ॥" इति
"अक्षरात्संभवति विश्वम्॥" इति च श्रुतिवचनम् ॥

॥ ८ ॥

**बिन्दोः पुरोक्तधवलाद्विशदाच्च जाता-**
**आकाशवायुदहनोदकभूमिरूपाः ॥**
**एवं च पञ्चविकृतिः सचराचराख्यम्**
**ब्रह्माण्डपिन्डमिदमादिजगत्प्रसूतम् ॥ ९ ॥**

अन्वय:—पुरोक्तधवलात् विशदात् बिन्दो: च आकाशवायुदहनोदकभूमिरूपा: जाता: ॥ एवं पञ्चविकृति: च सचराचराख्यम् ब्रह्माण्डपिण्डं इदं आदिजगत् प्रसूतम् ॥

व्याख्या—पुरोक्तधवलात् पूर्व्वोक्तलक्षणाच्छूनशुक्लात् ॥ विशदात् सर्व्वप्रकाशात् ॥ बिन्दो: च अपि ॥ आकाश: नभ: वायु: पवन: दहन: तेज: उदकं जलम् भूमि: पृथ्वी एतानि एव रूपा: पञ्चमहाभूतानि ॥ जाता: प्रभूता: ॥ पञ्चविकृति: पञ्चमहाभूतरूपविकारा: ॥ सचराचराख्यं आब्रह्मस्तंभपर्यन्तम् ॥ ब्रह्माण्डपिण्डम् संसारचक्रम् ॥ आदि प्रथमं आद्यक्षरान्वितं ॥ जगत् भुवनम् ॥

अभिप्राय:—शुक्लबिन्दोरपि पञ्चमहाभूतानि संभूतानि ॥ अतएव रक्तशुक्लबिन्दुमयप्रकाशविमर्शात्मकब्रह्मण: सर्व्वं जातम्॥

## तत्र शास्त्रवचनप्रमाणम्

"यस्मिन्भावा: प्रलीयन्ते लीनाश्च व्यक्ततां ययु:
पुनश्चाव्यक्ततां भूयो जायन्ते बुद्बुदा इव ॥" इति

श्रुतिवचनम् ।

इच्छाविलशितानन्तजगद्रश्मिविलासवत् ।
नौमिसस्विन्महापीठं शिवशक्तिपदाश्रयम् ॥" इति

आगमवचनम् ॥

॥ ९ ॥

**अन्योन्यभेदरहितं परबिन्दुयुग्मम्**
**भेदंतथैव मनुदेवतयोश्च नास्ति ॥**



**नोभिन्नता वचनवाचकयोस्तथैव**
**तस्मात्सुमन्त्रगुरुदेवमयैकभाव: ॥ १० ॥**

अन्वय:—(यथा) परबिन्दुयुग्मम् अन्योन्यभेदरहितं (अस्ति) ॥ तथैव मनुदेवतयो: च भेदं नास्ति ॥ वचनवाचकयो: च तथैव भिन्नता नो ॥ तस्मात् (कारणात्) सुमन्त्रगुरुदेवमयैकभाव: (वर्त्तते) ॥

व्याख्या —परबिन्दुयुग्मम् (प्रकाशविमर्शात्मकपूर्वोक्तबिन्दुयुगलम् ) ॥ भिन्नता भेदं ॥ नो (नास्ति) ॥ सुमन्त्रां मनु: गुरु: अध्यापक: देवता अमर: तन्मय: एकभाव: ऐक्यम् ॥

## तत्र शास्त्रवचनप्रमाणम्

"सर्व्वे वर्णात्मकामन्त्रास्ते च शक्त्यात्मका: प्रिये ।
शक्तिस्तु मातृका ज्ञेया सा च ज्ञेया शिवात्मिका ॥
या सा तु मातृका लोके परतेज: समन्विता ।
तया व्याप्तमिदं सर्व्वमाब्रह्मभुवनात्मकम् ॥" इति

तन्त्रसद्भाववचनम् ॥

"बिन्दुद्वितयं यद्वद्भेदविहीनं परस्परं तद्वत् ।
विद्यादेवतयोरपिनभेदलेशोऽस्ति वेद्यवेदकयो: ॥" इति

कामकलाविलासवचनम् ॥

॥ १० ॥

**वागर्थयोर्ननुपरस्परमेलनं यत्**
**संमीलितौ च शिवशक्तिमयौ तथैव ॥**

## सृष्टिस्थितिप्रलयभेदमयात्मदेहौ
## बीजत्रयात्मवपुषा भवतस्त्रिभिन्नौ ॥ ११ ॥

अन्वय:—यत् वागथयो: ननु परस्परमेलनं (अस्ति), तथैव शिवशक्तिमयौ च संमीलितौ (स्त:) ॥ सृष्टिस्थितिप्रलयभेदमयात्मदेहौ (शिवशक्तिमयौ) बीजत्रयात्मवपुषा त्रिभिन्नौ भवत: ॥

व्याख्या—वाक् च अर्थश्च वागर्थौ तयो: ॥ परस्परमेलनम् ॥अन्योन्यमिलापः ॥ शिवशक्तिमयौ प्रकाशविमर्शौ ॥ संमीलितौ संपृक्तौ ॥ सृष्टि: शिवादिक्षित्यन्ततत्वजालाविर्भाव: स्थिति: तत्परिपालनम् प्रलय: तेषां स्वात्मसाक्षात्कार: तेषां भेदा: विभागा: तन्मयौ आत्मानौ तौ एव देहौ ययो: तौ ॥ बीजत्रयं ऊर्द्धाम्नायमतेन वाग्भवकामराजशक्तिबीजत्रयं, पूर्वाम्नायमतेन वाङ्मायारमाबीजत्रयं, उत्तराम्नायमतेन रावखेचरीसंवर्त्तबीजत्रयं, पश्चिमाम्नायमतेन वाणीलज्जामारबीजत्रयं, अधराम्नायमतेन लज्जावधूकूर्च्चबीजत्रयं दक्षिणाम्नायमतेन कालीकूर्च्चत्रयाबीजत्रयं अस्य मतान्तरेण कूर्च्चस्थाने रमा, अत्र ऊर्द्धाम्नायमतमेव निहितम् ॥ अतएव वाग्भवादिबीजत्रयमेव आत्मवपु: निजस्वरूपं तेन ॥ त्रिभिन्नौ त्रिधाभावितौ ॥

अभिप्राय:—बिन्दुत्रयसमष्टिभूतकामकलाक्षररूपिणी वाग्भवकामराजशक्तिबीजात्मिका महात्रिपुरसुन्दरी प्रादुर्भवति ॥

### तत्र शास्त्रवचनप्रमाणम्

"स्वात्मगा: सृष्टिसंहारा: स्वरूपत्वेन संस्थिता:



तादात्म्यमनयोर्नित्यं वह्निदाहकयोरिव ॥" इति

अभिनवगुप्तवचनम् ॥

"आवयोर्जगदात्मत्वात्तादात्म्यमावयोरपि ।
तादात्म्यादावयोर्नित्यं जगत्प्राणावुभौ हि नौ ॥" इति

वडवानलतन्त्रवचनम् ॥

"तत्वत्रयविनिर्दिष्टा वर्णशक्तित्रयात्मिका ।
वागीश्वरी ज्ञानशक्तिर्वाग्भवे मोक्षरूपिणी ॥
कामराजे कामकला कामरूपा क्रियात्मिका ।
शक्तिबीजे पराशक्तिरिच्छैव शिवरूपिणी ॥
एवं देवी त्र्यक्षरात्मा महात्रिपुरसुन्दरी ।
पारंपर्येण विज्ञाता भवबन्धविमोचिनी ॥" इति

वामकेश्वरतन्त्रवचनम् ॥

॥ ११ ॥

## धामत्रयत्रिमनुपीठवरत्रयाख्य-
## शक्तित्रयत्रिपरबिन्दुविभिन्नभावात् ॥
## संभूततत्वजवपूंषि सदा जयन्ति
## माता च मानमथ मेयमिति त्रयाणि ॥ १२ ॥

अन्वय:—धामत्रयत्रिमनुपीठवरत्रयाख्यशक्तित्रयत्रिपरबिन्दुविभिन्नभावात् संभूततत्वजवपूंषि माता च मानं अथ मेयं इति त्रयाणि सदा जयन्ति ॥

व्याख्या—धामत्रयम् सोमाग्निसूर्य्यमण्डलत्रयम्, त्रिमनवः वाग्भवकामराजशक्तिवीजरूपमन्त्रत्रयम्, पीठवरत्रयाख्यं कामगिरिपूर्णशैलजालन्धरपीठत्रयम् शक्तित्रयम् इच्छाज्ञानक्रियाशक्तित्रयम्, त्रिपरविन्दवः शुक्लारुणमिश्रबिन्दुत्रयम्, तदात्मना विभिन्नं पृथग्भूतं भावं तस्मात् ॥ संभूतं सञ्जातं तत्वं तस्माज्जातानि वपूंषि एषां तानि ॥ माता अवगन्ता ईश्वरः, मानं तदवगतिसाधनभूतविद्या, मेयं ज्ञायमाना महात्रिपुरसुन्दरी ॥ अतएव माता ज्ञाता मानं ज्ञानम् मेयं ज्ञेयं ॥ जयन्ति सर्व्वोत्कर्षेण वर्त्तन्ते ॥

## तत्र शास्त्रवचनप्रमाणम्

"अतीतन्तुपरंतेजः स्वसम्विन्दुदयात्मकम् ॥
स्वेच्छाविश्वमयोल्लेख खचितं विश्वरूपकम्
चैतन्यमात्मनोरूपं निसर्गानन्दसुन्दरम् ।
मेयमातृप्रमामानप्रसरैः सङ्कुचत्प्रभम् ॥" इति

चतुःशतीवचनम् ॥

"आत्मैव वेदमग्र आसीत् ॥पुरुषविधः सोऽनुवीक्ष्यनान्यदात्मनोऽपश्यत् ॥ सोऽहमस्मीत्यग्रे व्याहरत् ॥ ततोऽहंनामाभवत् ॥ तस्मादाप्येतर्ह्यामन्त्रितोऽहमित्येवाग्र उक्तान्यथान्यन्नामप्रब्रूते ॥" इति

श्रुतिवचनम् ॥

॥ १२ ॥

**तेशां क्रमेण भुवनत्रितयं भवन्त्रि**
**लिङ्गत्रयञ्च परमाकथमातृकाश्च ॥**



**इत्थंपुरत्रितयया परिपूर्णविद्या**
**सन्तूर्य्यपीठनिकरादविभेदिनी सा ॥ १३ ॥**

अन्वयः—तेषां क्रमेण भुवनत्रितयं लिङ्गत्रयं च परमाकथमातृकाः च भवन्ति ॥ इत्थं पुरत्रितयया परिपूर्णविद्या सन्तूर्य्यपीठनिकरादिविभेदिनी सा (अस्ति) ॥

व्याख्या—तेषां क्रमेण महाबिन्दुमयत्वादेतेषां धामादीनां विभिन्नक्रमेणानुपूर्व्या ॥ भुवनत्रितयं भूर्भुवःस्व इति ॥ लिङ्गत्रयं स्वयंभूपरेतरवाणलिङ्गत्रयम् ॥ परमाः एव अकथमातृकाः अकथादिभेदभिन्नाक्षराः ॥ इत्थं पूर्वोक्तक्रमेण पुराणि शरीराणि त्रितयानि (भुवनलिङ्गमातृकात्रितयानि) यस्या सा तया परिपूर्णा पूरिता एव विद्या ॥ सन्तूर्य्याणि चतुर्थानि पीठानि तेषां निकराः आदिर्येषां ते तान् विभेदयति या सा ॥ सन्तूर्य्यपीठनिकरादिविभेदिनी त्रिविधात्मकसर्व्वप्रपञ्चाविर्भावभूः ॥ सा श्रीविद्यास्वरूपिणी महात्रिपुरसुन्दरी ॥

## तत्र शास्त्रवचनप्रमाणम्

"मातृकां पीठरूपिणीम् ॥" इति । "स्वसम्वित्त्रिपुरादेवी ॥" इति च

चतुःशतीवचवम् ॥

"त्रिमूर्त्तिसर्गाच्च पुरोभवत्वात् त्रयीमतत्वाच्च पुरैव देव्याः ॥
लये त्रिलोक्या अपिपूरकत्वात् प्रायोऽम्बिकायास्त्रिपुरेतिनाम ॥" इति

अभिनवगुप्तवचनम् ॥

॥ १३ ॥

शब्दं हि खोद्भवमथो पवनोद्भवश्च
स्पर्शश्च रूपमपि दीप्तिजतत्वजातम् ॥
क्षीरोद्भवं रसमुशन्ति भुवश्चगन्धम्
जाताश्च पञ्चदशकाः गुणकास्तु तेभ्यः ॥१४॥

अन्वय :—खोद्भवं हि शब्दं अथो पवनाद्भवं स्पर्शं च दीप्तिजतत्वजातं-रूपं च क्षीरोद्भवं रसं भुवश्च गन्धं उशन्ति ॥ तेभ्यः पञ्चदशकाः गुणकाः च जाताः ( भवन्ति ) ॥

व्याख्या—खात् आकाशात् उद्भवोयस्य तम् ॥ दीप्तिजस्य अग्नेः तत्वं दीप्तिज तत्वं तेजः तस्माज्जातम् ॥ पञ्चदशकाः गुणाः पञ्चदशगुणाः ॥ यथा शब्दआकाशगुणात्मकः ॥ एवं एतेः गुणाः यस्माद्यस्माद्भूताज्जातम् तत्तदेव गुणात्मकं भवति ॥ आकाशादारभ्यपृथ्वीपर्यन्तमुत्तरोत्तरमेकैकगुणाधिक्येन-पञ्चदशगुणाः संपद्यन्ते ॥

## तत्र शास्त्रवचनप्रमाणम्

" शब्दस्पर्शौ रूपं रसगन्धौ चेति भूतसूक्ष्माणि ।
व्यापकमाद्यं व्याप्यन्तूत्तरमेव क्रमेण पञ्चदश ॥" इति
कामकलाविलाशवचनम् ॥

" पञ्चतन्मात्रकैर्देवि दशपञ्चगुणैर्युतैः ।
जाताकूटात्मिकाविद्या श्रीमत्पञ्चदशाक्षरी ॥" इति
राजेश्वरीतन्त्रवचनम् ॥



॥ १४ ॥

एषा हि पञ्चदशवर्णमयात्मिकाऽस्ति
कूटात्मिका निखिलभौतिकनर्त्तनेष्टा ॥
नित्या खादिगुणभेदविभिन्नरूपा—
विद्याः पुरोक्तजनिताः परमाश्च सन्ति ॥ १५ ॥

अन्वय :—एषा हि पञ्चदशवर्णमयात्मिका कूटात्मिका निखिलभौतिक-नर्त्तनेष्टा अस्ति ॥ खादिगुणभेदविभिन्नरूपाः परमाः विद्याः नित्याः पुरोक्तजनिताः सन्ति ॥

व्याख्या—एषा पूर्व्वोक्तश्रीविद्या पञ्चदशवर्णमयात्मिका पूर्व्वोक्तपञ्च-दशगुणजातपञ्चदशाक्षरसमष्टिरूपिणी कूटात्मिका वाग्भवकामराज-शक्तिकूटमयी ॥ निखिलाः समस्ताः भौतिकाः भूतसम्बन्धिनः चराचराः तेषां नर्त्तनं संसाररूपनाट्यशालायां नाट्यं अतएव चालनम् तेन इष्टा अभिमता ॥ नित्याः कामेश्वरीप्रभृतिचित्रान्ताः पञ्चदशतिथिनित्याकलाः ॥ खः शब्दः आदिर्येषां ते तेषां गुणाः तेषां भेदाः तैः विभिन्नरूपाः यासां ताः ॥ पुरोक्तजनिताः पूर्व्वोक्तपञ्चदशाक्षरीविद्ययासंभूताः ॥

अभिप्राय :—पञ्चदशगुणा एव पञ्चदशाक्षरीविद्याभवति ॥ तस्याः प्रत्येकाक्षराश्च प्रत्येकतिथिनित्याकलारूपाः सन्ति ॥

## तत्र शास्त्रवचनप्रमाणम्

" इदमहद्भूतमनन्तपारं विज्ञानघनएवैतेभ्योभूतेभ्यः समुत्थाय तान्येवानु विनश्यति ॥" इति बृहदारण्यकवचनम् ॥

"प्रथमं वाग्भवंकूटं द्वितीयंकामकूटकम् ।
तृतीयं शक्तिकूटश्च कूटत्रयतनुर्मनुः ॥" इति
चन्द्रपीठवचनम् ॥

॥ १५ ॥

नित्याकलात्मकमयास्तिथयश्च सर्व्वे
शर्वेश्वरीसमरसाकृतयो भवन्ति ॥
श्रीवर्णकादिवसरात्रिमयाश्च दिव्याः
शुद्धप्रकाशसुविमर्शमयस्वभावाः ॥ १६ ॥

अन्वय :—नित्याकलात्मकयाः शर्वेश्वरीसमरसाकृतयः श्रीवर्णकाः दिव्याः दिवसरात्रिमयाः शुद्धप्रकाशसुविमर्शमयस्वभावाः सर्व्वे तिथयः भवन्ति ॥

व्याख्या—नित्यकलात्मकमयाः कामेश्वरीप्रभृतिचित्रान्तानित्याकलात्मिकाः ॥ शर्वः शिव ईश्वरी शक्तिः तयोः समरसं यस्मिन् तत्, तदेव आकृतयः येषां ते ॥ शर्वेश्वरीसमरसाकृतयः शिवशक्तिसमरसाकृतयः प्रकाशविमर्शस्फुटाकाराः ॥ शुद्धप्रकाशसुविमर्शमयस्वभावाः उज्वलान्धकारमयस्वभावाः ॥ सर्व्वे तिथयः प्रतिपत्प्रभृतिपूर्णिमान्ताः तिथयः ॥

## तत्र शास्त्रवचनप्रमाणम् ॥

"एक एव प्रकाशाख्यः परः कोऽपि महेश्वरः ।
यस्य शक्तिर्विमर्शाख्या सा नित्या गीयते बुधैः ॥



विमर्शाख्याच सादेवी पाञ्चविध्यं समागता ।
आकाशानिलसप्तार्चिः सलिलावनिभेदतः ॥
एकैकगुणवृद्धातु तिथिसंख्यात्वमागताः ।
विमर्शरूपिणी विद्या षोडशीयाप्रकीर्त्तिता ॥
गता सा षोडशैर्भेदैस्त्रिपुरा परमेश्वरी ।
सुन्दर्यादिमहापूर्वं विचित्रान्तं समन्ततः ॥
स्वागमादेव बोद्धव्यमिति संकेतमात्रतः ।
प्रतिपत्प्रभृतौ देव्याः पौर्णमास्यान्तिकं प्रिये ॥
एकैकं पूजयेद्यस्तु स सौभाग्यमवाप्नुयात् ॥ इति
वडवानलतन्त्रवचनम् ।

॥ १६ ॥

बिन्दुत्रयाज्झलुदिताक्षसमष्टिभेदै-
रुद्भाविताकृतिमयी परदेवताख्या ॥
शैवाख्यतत्वनिलयी परमात्मविद्या
सम्पूर्णलोकजननी खलु केवला सा ॥१७॥

अन्वयः—बिन्दुत्रयाज्झलुदिताक्षसमष्टिभेदैः उद्भाविताकृतिमयी परदेवताख्या शैवाख्यतत्वनिलयी परमात्मविद्या केवला सा सम्पूर्णलोकजननी खलु (भवति) ॥

व्याख्या—बिन्दुत्रयं विसर्गानुनासिकानुस्वाराः अचः स्वराः हलः

व्यञ्जनानि तैः उदितानि अक्षानि अक्षराणि तेषां समष्टिः तस्या भेदाः तैः ॥ उद्भाविता एव आकृतिः तन्मयी ॥ परदेवताख्या महात्रिपुरसुन्दरी ॥ शैवाख्यतत्वनिलयी शिवादिक्षित्यन्तषट्त्रिंशतत्वविग्रहा ॥ परमात्मविद्या ब्रह्मविद्या ॥ केवला स्वव्यतिरिक्तस्याभावादेकाकिनी ॥ सम्पूर्णानां समस्तानां लोकानां जननी जनयित्री ॥

## तत्र शास्त्रवचनप्रमाणम्

"सा स्वरव्यञ्जनविन्दुत्रयसमष्टिभेदैर्विभाविताकारा ।
षट्त्रिंशत्तत्वात्मा तत्वातीतातु केवला विद्या ॥" इति

कामकलाविलाशवचनम् ।

॥ १७ ॥

**सूक्ष्मा च सा त्रिपुरसुन्दरिका सुविद्या**
**वेद्याऽपि पूर्णमनुवद्ध्युभयात्मिकाऽस्ति ॥**
**तस्माच्च मन्त्रपरदेवतयोरभेदा-**
**न्मन्त्रोऽपि वाङ्मयतनुः परदेवतायाः ॥१८॥**

अन्वयः—सा सुविद्या त्रिपुरसुन्दरिका सूक्ष्मा च (अस्ति) ॥ वेद्या अपि पूर्णमनुवत हि उभयात्मिका अस्ति ॥ तस्मात् (कारणात्) मन्त्र-परदेवतयोः अभेदात् च मन्त्रः अपि परदेवतायाः वाङ्मयतनुः (अस्ति) ॥

व्याख्या—सूक्ष्मा ग्रहितुमशक्या सा वेदान्तेषु प्रसिद्धा ॥ वेद्या



चिदानन्दरूपिणो ॥ क्रमपूर्णपञ्चदशीमन्त्र इव पूर्णमनुवत् ॥ उभयात्मिका प्रकाशविमर्शात्मिका परदेवतायाः महात्रिपुरसुन्दर्याः ॥

## तत्र शास्त्रवचनप्रमाणम्

"यस्य यस्य पदार्थस्य या या शक्तिरुदीरिता ।
सातु सर्वेश्वरीदेवी स सर्वोऽपि महेश्वरः ॥
व्याप्ता पञ्चदशार्णैः सा विद्याभूतगुणात्मिका ।
पञ्चभिश्चतथाषड्भिश्चतुर्भिरपिचाक्षरैः ॥
स्वरव्यञ्जनभेदेन सप्तत्रिंशत्प्रभेदिनी ।
सप्तत्रिंशत्प्रभेदेन षट्त्रिंशत्तत्वरूपिणी ॥
तत्वातीतस्वभावाच विद्यैषा भाव्यते सदा ॥" इति

चतुःशतीवचनम् ॥

॥ १८ ॥

**या सान्तरोहसुशरीरवती महेशी**
**सैव त्रिभावनिहिता च परापरेशी ॥**
**पश्यन्तिकादिपुटकत्रयमातृकात्मा**
**श्रीचक्रतां भगवती त्रिपुटाप्रयाति ॥१९॥**

अन्वयः—या सान्तरोहसुशरीरवती महेशी सा परापरेशी एव त्रिभावनिहिता (अस्ति) ॥ पश्यन्तिकादिपुटकत्रयमातृकात्मा भगवती त्रिपुटा च श्रीचक्रतां प्रयाति ॥

व्याख्या—अन्तरः अन्तस्करणं तस्मिन् ऊहः वितर्कः तेन सह वर्त्तमानम् तदेव सु सुष्ठु शरीरं देहं यस्याः सा ॥ परस्य अपरस्य ईश्वरी परापरेशी चित्कलात्मिका महात्रिपुरसुन्दरी ॥ त्रिभावेन पूर्व्वोक्तत्रिप्रकारेण निहिता संज्ञायमाना ॥ पश्यन्तिका एव पश्यन्ती आदिशब्देन मध्यमा वैखरी च एताः एव पुटकत्रयरूपाः मातृकाः आत्मा यस्याः सा ॥ त्रिभावेन संपुटा संपुटीकृता इति त्रिपुटा महात्रिपुरसुन्दरी ॥ श्रीचक्रतां श्रीयन्त्रतां ॥ प्रयाति प्राप्नोति ॥

## तत्र शास्त्रवचनप्रमाणम्

"परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाच ॥" इति
"यतोवाचो निवर्त्तन्ते अप्राप्य मनसा सह ॥" इति च

श्रुतिवचनम् ॥

"स्वरूपज्योतिरेवान्तः परावागनपायिनी ।
यस्यां दृष्टस्वरूपायामधिकारोनिवर्त्तते ॥" इति

वडवानलतन्त्रवचनम् ॥

"पराभूजन्मपश्यन्ती वल्ली गुच्छसमुद्भवा ।
मध्यमा सौरभा वैखर्य्यक्षमाला जयत्यसौ ॥" इति

शुभगोदयवासनावचनम् ॥

॥ १६ ॥

**तस्माद्वदन्ति विबुधाः परदेवतुल्या-**
**श्चक्रोत्तमत्रिपुटयोर्नकदापि भेदः ॥**



**सूक्ष्माकृतिस्त्रिभुवने त्वनयोः परैव**
**संस्थूलयोस्तु परयोर्न हि भेदलेशः ॥२०॥**

अन्वयः—"तस्मात् [ कारणात् ] ॥ चक्रोत्तमत्रिपुटयोः भेदः कदापि न (वर्त्तते ॥ अनयोः तु सूक्ष्माकृतिः परा एव ॥ परयोः संस्थूलयोः तु भेदलेशः न हि (विद्यते) ॥" इति विबुधाः वदन्ति ॥

व्याख्या—चक्रोत्तमं श्रीचक्रं ॥ त्रिपुटा महात्रिपुरसुन्दरी तयोः ॥ अनयोः श्रीचक्रत्रिपुटयोः ॥ परयोः श्रीचक्रस्यसूक्ष्माकृतिरूपा परा च त्रिपुटायाः सूक्ष्माकृतिरूपा परा च तयोः ॥ संस्थूलयोः श्रीचक्रस्यस्थूलाकारश्च त्रिपुटायास्थूलाकारश्च तयोः ॥

## तत्र शास्त्रवचनप्रमाणम्

"एका सा आसीत् प्रथमं न वाऽऽसीत् ॥" इति ॥
"सर्वं खल्विदं ब्रह्म ॥" इति ॥ सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद ॥"
इति च श्रुतिवचनम् ॥

"तच्छक्तिपञ्चकं सृष्ट्वा लयेनाग्निचतुष्टयम् ।
पञ्चशक्तिचतुर्वह्नि संयोगाच्चक्रसंभवः ॥" इति

चतुःशतिवचनम् ॥

"स्थूलसूक्ष्मविभेदेन त्रैलोक्योत्पत्ति मातृका ॥" इति
गौरीकञ्चुकीतन्त्रवचनम् ॥

॥ २० ॥

**श्रीबैन्दवं परममध्यगमादिचक्र-**
**मुच्छूनतां व्रजति जातु यदा पराख्यम् ॥**

**कोणत्रयाकृतिमयेन तदा तदेव**
**स्पष्टं सदा परिणतं भवतीह दिव्यम् ॥२१॥**

अन्वयः—(यदा) पराख्यं परममध्यगं श्रीबैन्दवं आदिचक्रं एव उच्छूनतां (व्रजति) ॥ तदा तदेव (बिन्दुतत्त्वं) कोणत्रयाकृतिमयेन इह सदा स्पष्टं दिव्यं परिणतं भवति ॥

व्याख्या—पराख्यं पूर्वोक्तपरारूपं ॥ परममध्यगं श्रीचक्रस्यनवयोन्यात्मकस्य मध्ये भवं ॥ श्रीबैन्दवं प्रकाशविमर्शमयबिन्दुरूपं ॥ उच्छूनं संजातविकाशं ॥ कोणत्रयाकृतिमयेन त्रिकोणरूपेण अनुत्तरानन्देच्छाशृङ्गाटरूपेण ॥ परिणतं त्रिकोणाकारं ॥ श्रीचक्रस्य रहस्यमतं त्रिधावर्त्तते ॥ हयग्रीवमतं, आनन्दभैरवमतं दक्षिणामूर्त्तिमतञ्च ॥ प्रथममतद्वये सर्वानन्दमयबैन्दवचक्रादारभ्यत्रैलोक्यमोहनचतुरस्रचक्रपर्यन्तं नवचक्राणि विद्यन्ते ॥ किन्तु दक्षिणामूर्त्तिमते एवं दशचक्राणि विद्यन्ते ॥ तत्र त्रैवर्गसाधनकरवृत्तत्रयचक्रमपि विद्यते ॥ तस्मात्कारणात् श्रीचक्रोत्पत्तेः आवरणदेवतोत्पत्तेश्च मतान्तरेण किञ्चित् किञ्चिद्भेदलेशो दृश्यते ॥ अत्राहं दक्षिणामूर्त्तिमतेन व्याख्यामि ॥

अभिप्रायः—बिन्दोरुच्छूनात् त्रिकोणं भवति ॥

### तत्र शास्त्रवचनप्रमाणम्

"अनुत्तरानन्दचितिरिच्छाशक्तौ नियोजिता ।
त्रिकोणमितितत्प्राहुर्विशर्गामोदसुन्दरम् ।
मेयमातृप्रमामानप्रसरैः सङ्कुचत्प्रभम् ।



शृङ्गाटरूपमापन्नमिच्छाज्ञानक्रियात्मकम् ॥" इति
चतुःशतीवचनम् ॥

॥ २१ ॥

**एतत्त्रिकोणमयचक्रमपि त्रिबीज-**
**रूपं सहत्रितयशक्तिनिदानभूतम् ॥**
**वामादिपञ्चपरशक्तिगणाश्च तस्मात्**
**तन्वन्ति चक्रविभवास्तदनुत्तरांशाः ॥२२॥**

अन्वयः—एतत् त्रिकोणमयचक्रं अपि त्रिबीजरूपं सहत्रितयशक्तिनिदानभूतम् (अस्ति) ॥ तत् वामादिपञ्चपरशक्तिगणाः च अनुत्तरांशाः चक्रविभवाः तस्मात् तन्वन्ति ॥

व्याख्या—त्रिकोणमयचक्रं त्रिकोणम् ॥ त्रिबीजानि त्रिखण्डात्मकवाग्भवकामराजशक्तिबीजानि तेषां रूपं यस्य तत् ॥ हकारेण सह वर्त्तमानाः सहाः हकारांशाः ता एव त्रितयशक्तयः पश्यन्तीमध्यमावैखरीशक्तयः तेषां निदानभूतं उत्पत्तिकारणभूतं ॥ तत् तेन हेतुना ॥ वामादिपञ्चपरशक्तिगणाः वामाज्येष्ठारौद्र्यम्बिकापराशक्तयः ॥ अनुत्तरांशाः अकारांशाः ॥ चक्रविभवाः श्रीयन्त्रस्यनवयोनिचक्राङ्गभागाः ॥ तस्मात् त्रिकोणमयचक्रात् । तन्वन्ति विस्तारयन्ति ॥

### तत्र शास्त्रवचनप्रमाणम्

"इच्छाशक्तिस्तदा सेयं पश्यन्तीवपुषा स्थिता ।
ज्ञानशक्तिस्तथाज्येष्ठा मध्यमावागुदीरिता ॥

ऋृजुरेखामयी विश्वस्थितौ प्रथितविग्रहा ।
तत्संहृतिदशायान्तु बैन्दवं रूपमास्थिता ॥
प्रत्यावृत्तिक्रमेणैव शृङ्गाटवपुरुज्वला ।
क्रियाशक्तिस्तु रौद्रीयं वैखरी विश्वविग्रहा ॥" इति
"बीजत्रितय युक्तस्य सकलस्य मनोः पुनः ।
एतानि वाच्यरूपाणि कुलकौलमयानि तु ॥ इति च

वामकेश्वरतन्त्रवचनम् ॥

"तिस्रः पुरस्त्रिपथा विश्वचर्षिणी ।
अत्राकथा अक्षराः सन्निविष्ठाः अजरा महत्तरा महिमा देवतानाम्"

इति श्रुतिवचनम् ॥

॥ २२ ॥

**इच्छादिकाः परतराश्च तुरीयशान्ता**
**सर्वा हि सोत्तरमुखाः सहसैव भान्ति ॥**
**वामाद्यनुत्तरमुखाकृतिपञ्चकास्ताः**
**प्राप्ताः सुशक्तिनवकैर्नवयोनयस्तैः ॥२३॥**

अन्वय :—परतराः सर्व्वाः इच्छादिकाः च तुरीयशान्ताः हि सोत्तरमुखाः ताः वामाद्यनुत्तरमुखाकृतिपञ्चकाः सहसा एव भान्ति ॥ तैः सुशक्तिनवकैः नवयोनयः प्राप्ताः ॥

व्याख्या—सर्व्वाः इच्छादिकाः इच्छाज्ञानक्रियाशक्तयः ॥ तुरीयशान्ताः चतुर्थीशान्ताः ॥ उत्तरमुखैः सह वर्त्तमानाः याः ताः सोत्तरमुखाः ॥



वामा आदि यासां ताः वामादयः वामाज्येष्ठारौद्र्यम्बिकापराः ताः एव अनुत्तरमुखाः अधोवक्त्राः ताः एव आकृतयः आकाराः यासां ताः एव पञ्चकाः पञ्चशक्तयः ॥ नवयोनयश्च श्रीयन्त्रस्य ॥ प्राप्ताः प्राप्नुवन्ति ॥ "गत्यर्थाकर्म्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतीभ्यश्चेति कर्त्तरिवर्त्तमानेक्तः ॥"

अभिप्रायः—इच्छाज्ञानक्रियाशान्ताः एताश्चतुःशक्तयः उत्तरावयवाः श्रीचक्रस्योर्द्ध्वमुखत्रिकोणचतुष्टयरूपाः ॥ वामाज्येष्ठारौद्र्यम्बिकापराः एताः पञ्चशक्तयोऽनुत्तरावयवाः श्रीचक्रस्याधोमुखत्रिकोणपञ्चरूपाः ॥ तस्मात् कारणात् एताः नवशक्तयः एव श्रीचक्रस्य नवत्रिकोणाकारेण परिणताः ॥

## तत्र शास्त्रवचनप्रमाणम्

"इच्छाज्ञानक्रियाशान्ता उत्तरांशाव्यवस्थिताः ।
वामाज्येष्ठा च सा रौद्री चाम्बिका पञ्चमी परा ॥
स्थिताश्चानुत्तरांशास्ताः योन्याकारैः सदोज्वलैः ।
यैर्निर्मितन्तु संसारात्मकं श्रीचक्रमुत्तमम् ॥" इति

वडवानलतन्त्रवचनम् ॥

॥ २३ ॥

**संसूक्ष्मदेहसहिता नवनादलीनाः**
**संस्थूलदेहविभवा नववर्गयुक्ताः ॥**
**श्रीमध्यमाकृतिमयाः नवचक्रभिन्नाः**
**पूर्वोक्तशक्तिनवकाः हि नवात्मभूताः ॥२४॥**

अन्वयः—पूर्वोक्तशक्तिनवकाः हि संसूक्ष्मदेहसहिताः (सत्यः) नवनादलीनाः संस्थूलदेहविभवाः (सत्यः) नववर्गयुक्ताः श्रीमध्यमाकृतिमयाः (सत्यः) नवचक्रभिन्नाः (भूत्वा) नवात्मभूताः (भवन्ति) ॥

व्याख्या—नवनादलीनाः चिञ्चिण्यादिनवनादमयाः ॥ नववर्गयुक्ताः अकचटतपयशलेतिभूतलिप्यादिनववर्गात्मिकाः ॥ नवचक्रभिन्नाः श्रीचक्रस्यनवत्रिकोणचक्रभिन्नरूपाः ॥ पुर्वोक्तशक्तिनवकाः इच्छाज्ञानक्रियाशान्तावामाज्येष्ठारौद्र्यम्बिकापराः ॥ नवात्मभूताः पृथक्पृथक्प्रकारेण नूतनरूपं धृताः ॥

अभिप्रायः—नवशक्तयः पूर्वोक्तप्रकारेणोत्तरानुत्तरमुखैस्त्रिकोणाकारैर्नवचक्रभिन्नाः भवन्ति ॥ तास्तु मध्यमाकाराज्ञेयाः ॥ तासां स्थूलाकारा भूतलिपिक्रमाक्षरात्मिकाः सूक्ष्माकारास्तु तासां नवनादमयाः ॥ यथा मित्रवरुणसदनात् वायुनिरोधेन स्वाधिष्ठानादिकमलभेदपुरःसरंद्वादशार्णारविन्दासनस्थंपरमशिवाङ्कमुपसर्पन्ती महामातृकाकुण्डलिनी वहुविधनादात्मिकायाऽनुभूयते ॥ सा समाधिसमधिगतसर्वैश्वर्यैर्महामाहेश्वरैः स्वात्मत्वेन मन्यते ॥

## तत्र शास्त्रवचनप्रमाणम्

“यदा हंसो नादलीनो भवति तदा तूर्यातीतमुन्मननमजपोपसंहारमित्यभिधीयते ॥” इति

“नादो दशविधोजायते चिणीति प्रथमः चिञ्चिणीति द्वितीयः घण्टानादस्तृतीयः' शङ्खनादश्चतुर्थः पञ्चमस्तन्त्रीनादः षष्टस्तालनादः सप्तमो वेणुनादः अष्टमो भेरीनादः नवमो मृदङ्गनादः दशमो मेघनादः ॥ नवमं परित्यज्य दशमेवाभ्यसेत् ॥ तस्मिन् मनो विलीयते ॥” इति च श्रुतिवचनम् ॥



“या सा तु मातृकालोके परतेजः समन्विता ।
तया व्याप्तमिदं सर्वमाब्रह्मभुवनात्मकम् ॥
तत्रस्थश्चयथानादो व्यापितश्च सुरार्चिते ।
अवर्णस्थो यथा वर्णस्थितः सर्वगतः प्रिये ॥
तथाहं कथयिष्यामि निर्णयार्थं स्फुटं तव ।
या सा शक्तिः परा सूक्ष्मा निराकारेति कीर्त्तिता ॥
हृद्बिन्दुं वेष्टयित्वा तु सुषुप्ता भुजगाकृतिः ।
तत्र सुप्तो महायोगी न किञ्चिन्मन्यते यमी ॥
चन्द्रार्कानलनक्षत्रैर्भुवनानिचतुर्दश ।
व्याप्तोदरा तु सादेवी विषवन्मूढतांगता ॥
प्रवुद्धा सा निनादेन परेण ज्ञानरूपिणी ।
मथिता चोदरस्थेन वन्धनादपि वह्निना ॥
तावद्धै भ्रमयोगेन मन्थनं शक्तिविग्रहे ।
भेदात्तु प्रथमोत्पन्नात् बिन्दुर्नादत्वमीयते ॥
समुत्थिता यथा तेन कालसूक्ष्मा तु कुण्डली ।
चतुष्कलमयो बिन्दुः शक्तेश्चोत्तरगः प्रभुः ॥
मध्यमन्मथयोगेन ऋजुत्वं जायते प्रिये ।
ज्येष्ठाशक्तिः स्मृता सा तु बिन्दुद्वयसुमध्यमा ॥
बिन्दुनादत्वमायाता वैखर्य्याऽमृतकुण्डली ।
लाकिनीनाम सा ज्ञेया उभौ बिन्दू यथा गतौ ॥
त्रिपदा सा समाख्याता रौद्रीनाम्ना तु गीयते ।
रोधिनी सा समुद्दिष्टा मोक्षमार्गनिरोधनात् ॥

कार्य्यकारणभावेन इयं सूक्ष्मा सैव स्थूला एव ॥ हेतुपरहेतुमतं भेदाभेदरूपं जन्यजनकरूपवत् ॥ प्रदिष्टम् मृदूघटवत ॥

अभिप्रायः—वाचारम्भणमात्रत्वात् एकमेव वस्तु उभयविधं भवति ॥

## तत्र शास्त्रवचनप्रमाणम्

"यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् वाचारम्भणं विकारोनामधेयं मृत्तिकेत्येव सत्यम् ॥" इति श्रुतिवचनम् ॥

॥ २६ ॥

तस्मात् परं शषसयुक्तपवर्गवर्ण-
संमेलनात् भवति रोगहराष्टकोणम् ॥
अष्टारबिन्दुहुतकोणकबिम्बकेन
रम्यं तटाख्यचकजैर्दशकोणयुग्मम् ॥२७॥

अन्वयः—तस्मात् परं शषसयुक्तपवर्गवर्णसंमेलनात् रोगहराष्टकोणं भवति ॥ अष्टारबिन्दुहुतकोणबिम्बकेन तटाख्यचकजैः दशकोणयुग्मं ( भवति ) ॥

व्याख्या—शषसयुक्तपवर्गवर्णाः शषसपफवभमा इत्यष्टवर्णाः तेषां संमेलनम् एकीभूतम् तस्मात् ॥ रोगहराष्टकोणं सर्वरोगहरचक्रं ॥ अष्टारं सर्वरोगहरचक्रं बिन्दुः सर्वानन्दमयचक्रं हुतकोणकं सर्वसिद्धिप्रद-चक्रम् तेषां बिम्बकं प्रतिबिम्बं ॥ तटाख्यचकजैः तवर्गटवर्गचवर्गकवर्गा-क्षरैः ॥ दशकोणयुग्मं सर्वरक्षाकरान्तर्दशारसर्वार्थसाधकवहिर्दशारचक्रे ॥

अभिप्राय:—शषसपफत्रभमात्मकाष्टकोणं मध्यत्रिकोणस्य विकासो भवति ॥ मध्यत्रिकोणं अष्टारस्याष्टत्रिकोणानि च बिन्दुश्चैवं दशभाग-प्रतिबिम्बेन द्विधाभूत्वा तथदधनटठडढणात्मकसर्वरक्षाकरान्तर्दशारचक्रम् चछजझञकखगघङात्मकसर्वार्थशाधकबहिर्दशारचक्रं भवत: ॥

## तत्र शास्त्रवचनप्रमाणम्

"नवत्रिकोणस्फुरितप्रभारूपदशारकम् ॥" इति
तन्त्रसद्भाववचनम् ॥

"शषसपवर्गमयं सद्वसुकोणं मध्यकोणविस्तार: ।
तच्छायाद्वितयमिदं दशारचक्रद्वयात्मना विततम् ॥
तटचकवर्गचतुष्टयविलसनविस्पष्टकोणविस्तारम् ॥" इति
कामकलाविलासवचनम् ॥

॥ २७ ॥

पूर्वोक्तचक्रकचतुष्कजभा:समेत-
सर्वार्थसाधकदशारकबिम्बकेन ॥
आदिस्वरै: सकृदमोरहितैश्च सर्व
सौभाग्यदं शुभचतुर्दशकोणकञ्च ॥२८॥

अन्वय :— पूर्वोक्तचक्रकचतुष्कजभा:समेतसर्वार्थसाधकदशारकबिम्ब-केन अमोरहितै: आदिस्वरै: च सौभाग्यदं शुभचतुर्दशकोणकं च सकृत् ( भवति ) ॥

शशाङ्कशकलाकारा अम्बिका चार्द्धचन्द्रिका ।
एकैवेत्थं परा शक्तिः त्रिधा सा तु प्रजायते ॥
आभ्यो युक्ता विविक्ताख्यः सञ्जातो नववर्गकः ।
नवधा च स्मृता सा तु नववर्गोपलक्षिता ॥" इति

तन्त्रसद्भाववचनम् ॥

॥ २४ ॥

**एवं पुरोक्तपरकामकलात्मिका च**
**श्रीबैन्दवत्रितयतत्वजवर्णलीना ॥**
**माता गुणत्रितययुक्तपरात्मिका च**
**सेयं सुसिद्धिद हुतात्मकतां प्रयाति ॥२५॥**

अन्वयः—एवं पुरोक्तपरकामकलात्मिकाच श्रीबैन्दवत्रितयतत्वजवर्ण-लीना गुणत्रितययुक्तपरात्मिका च सा इयं माता सुसिद्धिदहुतात्मकतां प्रयाति ॥

व्याख्या—श्रीबैन्दवत्रितयतत्वं ( शुक्लारुणमिश्रतत्वं ) ॥ तस्माज्जातवर्णाः (अक्षराणि) तेषां लीनाः ॥ श्रीबैन्दवत्रितयतत्वजवर्णलीनाः अहङ्कारात्मा ॥ "अ-हङ्कारतत्वनिलयोद्भवबिन्दुयुग्मम् ॥" इति पूर्वोक्तम् ॥ गुणत्रितयम् इच्छाज्ञानक्रियाशक्तिमयसत्वरजस्तमोगुणत्रितयम् तेन युक्ता सहिता परा-त्मिका ईश्वरी ॥ माता सर्वजगन्निर्मात्र्येका ॥ सुसिद्धिदहुतात्मकतां अनुत्तरानन्देच्छासंघट्टात्त्रिकोणतां सर्वसिद्धिप्रदत्रिकोणचक्रताम् ॥

अभिप्रायः—कामकलायामादिहान्तवर्णैः सह त्रिगुणात्मिकायां भूतायां सत्यां श्रीचक्रस्य सर्वसिद्धिप्रदत्रिकोणचक्रं भवति ॥



## तत्र शास्त्रवचनप्रमाणम्

"बिन्दुत्रयात्मकं स्वात्मशृङ्गाटं विद्धि सुन्दरम् ।
मिश्रं शुक्लञ्च रक्तञ्च पुराणं प्रणवात्मकम् ॥
रेखात्रयावगन्तव्यं संविन्मात्रं शिवात्मकम् ।
रक्तमस्यनिराधारमवशिष्टं ततः प्रियम् ॥
तयोर्मिश्रं तु संयोगे निर्व्वाणं निर्मलं पदम् ॥" इति

रहस्याम्नायवचनम् ॥

"आत्मा वा इदमेक एवाग्र आसीत् ॥" इति श्रुतिवचनम् ॥

॥ २५ ॥

**सूक्ष्माङ्गमेव किल कारणमम्बिकायाः**
**स्थूलाकृतिर्भवति कर्म्म च चित्कलायाः ॥**
**संस्थूलसूक्ष्मवपुषोर्न हि भेदलेशः**
**तस्माच्च हेतुपरहेतुमतं प्रदिष्टम् ॥२६॥**

अन्वयः—अम्बिकायाः चित्कलायाः किल सूक्ष्माङ्गं एव कारणं (भवति) (तस्याः) स्थूलाकृतिः च कर्म्म भवति ॥ संस्थूलसूक्ष्मवपुषोः भेदलेशः न हि (वर्त्तते) ॥ तस्मात् (कारणात्) च हेतुपरहेतुमतं प्रदिष्टम् (अस्ति) ॥

व्याख्या —सूक्ष्माङ्गं सूक्ष्माकारं ॥ कारणं बीजं प्रथमोद्भूतत्वात् ॥ स्थूलाकृतिः स्थूलाकारं ॥ कर्म्म कार्य्यं तज्जन्यत्वात् ॥ तस्मात् कारणात्

व्याख्या—पूर्वोक्तचक्रकचतुष्कं सर्वानन्दमयचक्रसर्वसिद्धिप्रदचक्रसर्वरोगहरचक्रसर्वरक्षाकरचक्राणि तेषां भाः प्रभा तयासमेतम् संयुक्तम् सर्वार्थसाधकदशारकं बहिर्दशारचक्रं तस्य बिम्बकं प्रतिबिम्बं तेन ॥ अं च अः च ताभ्यांरहिताः तैः ॥ अ आदियेषां ते तदेव स्वराः स्वरवर्णाः तैः ॥ सौभाग्यदं शुभचतुर्दशकोणकं सर्वसौभाग्यदायकचतुर्दशारचक्रम् ॥

अभिप्राय :—सर्वानन्दमयचक्रं च सर्वसिद्धिप्रदचक्रं च सर्वरोगहरचक्रं च सर्वरक्षाकरचक्रं च सर्वार्थसाधकचक्रस्य दशत्रिकोणानि च एवं चतुर्दशभागप्रतिबिम्बेन अआइईउऊऋॠऌॡएऐओऔ इति चतुर्दशस्वरैः सह सर्वसौभाग्यदायकचतुर्दशारचक्रं भवति ॥

## तत्र शास्त्रवचनप्रमाणम्

"चतुश्चक्रप्रभारूपसंयुक्तपरिणामतः ॥" इति

कामकलाविलासवचनम्

"विन्दुत्रिकोणवसुकोणदशारकैश्च सर्वार्थकोणजनितं मनुकोणचक्रम् ॥"

इति विमलातन्त्रवचनम् ॥

॥ २८ ॥

**काद्यष्टवर्गनिकरैः विकृतिस्वरूपैः**
**संक्षोभणाष्टदलचक्रमथो परायाः ॥**
**तस्य द्विधाकृतिमयप्रतिबिम्बकेना-**
**शापूर्तिषोडशदलं स्वरवर्णयुक्तम् ॥२९॥**



अन्वयः—विकृतिस्वरूपैः काद्यष्टवर्गनिकरैः परायाः अथो संक्षोभनाष्टदलचक्रं (भवति)॥ तस्य द्विधाकृतिमयप्रतिबिम्बकेन स्वरवर्णयुक्तं आशापूर्तिषोडशदलम् (भवति) ॥

व्याख्या—काद्यष्टवर्गनिकरैः कचटतपयशलवर्गाक्षरैः ॥ तस्य सर्वसंक्षोभणाष्टदलचक्रस्य ॥ द्विधा आकृतिः आकारः तन्मयं प्रतिबिम्बकं छाया तेन ॥ आशापूर्तिषोडशदलं सर्वाशापरिपूरकषोडशदलचक्रम् ॥

अभिप्रायः—विकृतिभूतकाद्यवर्गैरष्टदलचक्रं, तस्य प्रकाशविमर्शाभ्यां सह जनित छायया स्वरवर्णैश्च युक्तम् शोडशदलचक्रं भवतः ॥

## तत्र शास्त्रवचनप्रमाणम्

"कादिभिरष्टभिरुपचितमष्टदलाब्जश्चवैखरी वर्गैः ।
स्वरगणसमुदितमेतद्द्वयष्टदलाम्भोरुहश्च सञ्चिन्त्यम् ॥ इति

कामकलाविलासवचनम् ॥

॥ २९ ॥

**त्रैवर्ग्गसाधनकरं परमं त्रिवृत्तम्**
**त्रैलोक्यमोहनकरञ्च सुभूमिचक्रम् ॥**
**बिन्दुत्रयाक्षरकलाप्रतिबिम्बकेन**
**श्रीमच्छ्रिया भवति यन्त्रमहाधिराजः ॥३०॥**

अन्वय :—त्रैवर्गसाधनकरं परमं त्रिवृत्तं त्रैलोक्यमोहनकरं सुभूमि-

चक्रं च बिन्दुत्रयाक्षरकलाप्रतिबिम्बकेन (भवत:) ॥ (एवं) श्रिया: श्रीमान् यन्त्रमहाधिराजः भवति ॥

व्याख्या—त्रिवृत्तं वृत्तत्रयचक्रं ॥ सुभूमिचक्रं भूपुरचक्रम् ॥ बिन्दुत्रयाक्षरकला: अहङ्कारान्तर्गतसमस्तवर्णकला: तेषां प्रतिबिम्बकं छाया तेन ॥ श्रियाः श्रीमान् यन्त्रमहाधिराज: श्रीयन्त्रराज: ॥

## तत्र शास्त्रवचनप्रमाणम्

"बिन्दुत्रयमयं तेजस्त्रिविकारं त्रिवृत्तकम् ॥
त्रैवर्गसाधनंचक्रं पशूनां बुद्धिनाशनम् ॥" इति

वडवानलतन्त्रवचनम् ॥

"अहङ्कारान्तरःसंस्थवर्णरूपं भूपुरत्रयम् ॥
त्रिखण्डम् मातृकाचक्रं सोमसूर्य्यानलात्मकम् ॥" इति

तन्त्रान्तरवचनम्

॥ ३० ॥

सेयम् यदा भवति कामकलात्मिका श्रीः
श्रीचक्रतां परिगता परमात्मविद्या ॥
तद्देहजावयवकाः सकलास्तदा च
श्रीचक्रगावरणशक्तिमयस्वरूपाः ॥३१॥



अन्वय:—यदा सा इयं कामकलात्मिका परमात्मविद्या श्री: श्रीचक्रतां परिगता भवति । तदा सकला: तद्देहजावयवका: श्रीचक्रगावरणशक्तिमयात्मरूपा: (भवन्ति) ॥

व्याख्या—श्रीचक्रतां परिगता श्रीचक्ररूपेण स्थिता ॥ तस्या: श्रियाः देहं शरीरं तस्मात् जाता: अवयवका: अङ्गप्रत्यङ्गानि ॥ श्रीचक्रे गताः याः ता: श्रीचक्रगा: ता एव आवरणशक्तय: तन्मयानि आत्मरूपाणि यासां ता: ॥

## तत्र शास्त्रवचनप्रमाणम्

"एवं रूपं परंतेज: श्रीचक्रवपुषास्थितम् ॥
तदीयशक्तिनिकरस्फुरदूर्मिससावृतम् ॥ " इति

तन्त्रसद्भाववचनम्

॥ ३१ ॥

सा श्रीः स्वयं भगवती मणिपीठमाता
कामेश्वरेण सह बैन्दवतां प्रयाति ॥
अग्न्यस्त्रतामतिरहस्ययुवत्यभिख्यै-
रग्नीन्दुसूर्यमयभास्त्रितयानि यान्ति ॥३२॥

अन्वय:—सा मणिपीठमाता श्री: स्वयं कामेश्वरेण सह बैन्दवतां प्रयाति ॥ अग्नीन्दुसूर्यमयभा: त्रितयानि च अतिरहस्ययुवत्यभिख्यै: अग्न्यस्त्रतां यान्ति ॥

व्याख्या—मणिपीठं मणिद्वीपाख्यदेवीलोकं तस्य माता नायिका ॥ वैन्दवतां बैन्दवचक्रतां ॥ अग्न्यस्रतां त्रिकोणचक्रतां ॥ अतिरहस्ययुवत्यभिख्यैः कामेश्वर्याद्यतिरहस्ययुवतिस्वरूपैः ॥ अग्नीन्दुसूर्य्यमयभाः वह्निचन्द्रार्कमयकान्त्यः तासां त्रितयं तानि ॥

## तत्र शास्त्रवचनप्रमाणम्

"कलाविद्या पराशक्तेः श्रीचक्राकाररूपिणी ।
तन्मध्ये बैन्दवस्थानं तत्रास्ते परमेश्वरी ॥
सदाशिवेन संपृक्ता सर्वतत्वादिगा सति ।
चक्रं त्रिपुरसुन्दर्याः ब्रह्माण्डाकारमीश्वरि ॥" इति

भैरवयामलवचनम् ॥

"कामेश्वरी तथा वज्रेश्वरी च भगमालिनी ।
अग्निसूर्येन्दु भावेन देव्या धामत्रयोद्भवाः ॥" इति

वृहद्वडवानलतन्त्रवचनम् ॥

"अतिपूर्वरहस्यास्तु मध्यस्थाः स्थूलविग्रहाः ॥" इति

तन्त्रराजवचनम् ॥

॥ ३२ ॥

**अष्टारतां किल महावसुसूक्ष्मदेहा-**
**देव्याः परापररहस्ययुवत्यभिख्यैः ॥**
**ज्ञानेन्द्रियाणिच निगर्भपरात्मरूपै-**
**रन्तर्दशारमयचक्रकतां प्रयान्ति ॥३३॥**



व्याख्या—देव्याः महावसुसूक्ष्मदेहाः परापररहस्ययुवत्यभिख्यैः अष्टारतां किल ( प्रयान्ति ) ॥ ज्ञानेन्द्रियाणि च निगर्भपरात्मरूपैः अन्तर्दशारमयचक्रकतां प्रयान्ति ॥

व्याख्या—महावसुसूक्ष्मदेहाः अष्टसूक्ष्मदेहाः ॥ यथा— "चितिश्चित्तञ्चचैतन्यं चेतनेन्द्रियकर्म्म च ॥ जीवः कलाशरीरञ्च सूक्ष्मं पुर्यष्टकं भवेत् ॥" इति ॥ देव्याः श्रियाः ॥ परापररहस्ययुवत्यभिख्यैः वशिन्यादिपरापररहस्ययुवतिस्वरूपैः ॥ अष्टारतां अष्टकोणचक्रतां ॥ ज्ञानेन्द्रियाणि त्वक्चक्षुश्रोत्ररसनाघ्राणानि ॥ निगर्भ परात्मरूपैः सर्वज्ञादिनिगर्भयुवतिस्वरूपैः ॥ अन्तर्दशारमयचक्रकतां अन्तर्दशारचक्रतां ॥

अभिप्रायः—श्रियाः सूक्ष्मदेहाः परापरयुवतिस्वरूपैरष्टारतां ज्ञानेन्द्रियाणि च हेतुपरहेतुमतेन द्विधाभूत्वा निगर्भयुवतिरूपैरन्तर्दशारचक्रतां प्रयान्ति ॥

## तत्र शास्त्रवचनप्रमाणम्

"वसिन्यादिस्वरूपाश्च देव्याः सूक्ष्माष्टदेहकाः ।
सर्वज्ञकादिदशका ज्ञानेन्द्रियस्वरूपकाः ॥" इति

वृहद्वडवानलतन्त्रवचनम् ॥

"संप्रदायास्तदन्तस्थाः कुलकौलनिगर्भिकाः ॥
रहस्याः स्युस्तदन्ताश्च परापररहस्यकाः ॥" इति

तन्त्रराजवचनम् ॥

॥ ३३ ॥

**कर्म्मेन्द्रियाणि कुलकौलयुवत्यभिख्यैः**
**सम्यक् प्रयान्ति सुवहिर्दशकोणताञ्च ॥**

मन्वश्रतां भगवतीकरणादयस्ते
श्रीसंप्रदायरमणीतनुभिः प्रयान्ति ॥३४॥

अन्वय:—कर्म्मेन्द्रियाणि च कुलकौल्युवत्यभिख्यैः सुवहिर्दशकोणतां सम्यक् प्रयान्ति ॥ ते भगवतीकरणादयः श्रीसंप्रदायरमणीतनुभिः मन्वश्रतां प्रयान्ति ॥

व्याख्या—कर्म्मेन्द्रियाणि वाक्पाणिपादपायूपस्थाः हेतुपरहेतुमतेन द्विधाभूत्वा कुलकौल्युवत्यभिख्यैः सर्वसिद्धिप्रदादिकुलकौलयोगिनीस्वरूपैः सुवहिर्दशकोणतां प्रयान्ति ॥ भगवत्याः श्रियाः करणादयः अन्तस्करणानि ॥ श्रीसंप्रदायरमणीतनुभिः सर्वसंक्षोभिण्यादिसंप्रदाययोगिनीस्वरूपैः ॥

तत्र शास्त्रवचनप्रमाणम्

"मनोवुद्धिचित्ताहङ्कारेति प्रधानान्तस्करणानि ॥ चेतनाचैतन्योच्छ्वासनिःस्वासेच्छाज्ञानक्रियापरालयशून्येति दशोपान्तस्करणानि ॥" इति
श्रुतिवचनम् ॥

"कर्म्मेन्द्रियस्वरूपाश्च सर्वसिद्धिप्रदादिकाः ।
संक्षोभिण्यादिरूपाणि देव्यन्तस्करणानि च ॥" इति
वृहद्वडवानलतन्त्रवचणम् ॥

॥ ३४ ॥

अव्यक्तकं महदहङ्कृतितत्वयुग्मम्
तन्मात्रकानि सकलानि पराख्यदेव्याः ॥
गच्छन्ति वै वसुदलाभिदचक्रताश्च
संशुद्धगुप्ततरयोगिनिकास्वरूपैः ॥३५॥



अन्वय:—पराख्यदेव्याः अव्यक्तकं महदहङ्कृतितत्वयुग्मम् सकलानि तन्मात्रकानि च वसुदलाख्यसुचक्रतां संशुद्धगुप्ततरयोगिनिकास्वरूपैः वै गच्छन्ति ॥

व्याख्या—पराख्यदेव्याः श्रियाः ॥ अव्यक्तकं अव्यक्ततत्वं महदहङ्कृतितत्वयुग्मम् महत्तत्वं अहङ्कारतत्वञ्च ॥ सकलानि तन्मात्रकानि शब्दरूपस्पर्शरूपरशगन्धेति पञ्चतन्मात्राः ॥ वसुदलाख्यसुचक्रतां अष्टदलचक्रतां ॥ संशुद्धगुप्ततरयोगिनीकास्वरूपैः अनङ्गकुशुमादिगुप्ततरयोगिनी स्वरूपैः ॥

तत्र शास्त्रवचनप्रमाणम्

"अनङ्गकुशुमाद्यास्तन्मात्रातत्वत्रयोद्भवाः ॥" इति
वृहद्वडवानलतन्त्रवचनम् ॥

"प्रकटा वाह्यगा गुप्तास्ततो गुप्ततरास्तदा ॥" इति
तन्त्रराजवचनम् ॥

॥ ३५ ॥

देव्या वहिर्गतमनश्च दशेन्द्रियाणि
पृथ्व्यादिपञ्चकमहोपनिषत्पदानि ॥
भूयः समस्तपरगुप्तयुवत्यभिख्यैः
श्रीषोडशारमयचक्रकतां प्रयान्ति ॥३६॥

अन्वय :—भूयः देव्याः वहिर्गतमनः च दशेन्द्रियाणि पृथ्व्यादिपञ्चक-

महोपनिषत्पदानि समस्तपरगुप्तयुवत्यभिख्यैः श्रीषोडशारमयचक्रकतां प्रयान्ति ॥

व्याख्या—अन्तस्करणान्तर्गतान्तर्गतमनः एतद्बहिर्गतमनः ॥ पृथ्व्यादिपञ्चकमहोपनिषत्पदानि क्षित्यादिपञ्चमहाभूतानि ॥ समस्तपरगुप्तयुवत्यभिख्यैः कामाकर्षिण्यादिगुप्तयोगिनीस्वरूपैः ॥ श्रीषोडशारमयचक्रकतां षोडशदलचक्रतां ॥

## तत्र शास्त्रवचनप्रमाणम्

"बहिर्गतमनः पञ्चमहाभूतेन्द्रियाणि च ॥
महात्रिपुरसुन्दर्याः कामाकर्षिणिकादिकाः ॥" इति
बृहद्वडवानलतन्त्रवचनम् ॥

॥ ३६ ॥

वृत्तत्रयप्रथितचक्रकतामवस्था-
देव्याश्च मातृरमणीतनुभिः प्रयान्ति ॥
संविन्मयाः सकलधातव आद्यवस्था-
भूचक्रतां प्रकटयोगिनिकास्वरूपैः ॥३७॥

अन्वयः—देव्याः अवस्थाः च मातृरमणीतनुभिः वृत्तत्रयप्रथितचक्रकतां प्रयान्ति ॥ संविन्मयाः सकलधातवः आद्यवस्थाः प्रकटयोगिनिकास्वरूपैः भूचक्रतां (प्रयान्ति) ॥





व्याख्या—अवस्थाः जाग्रत्स्वप्नासुषुप्तितूर्यतूरीयातीतावस्थाः बाल्यौवनजरावस्थाः भोजनादिसकलावस्थाः ॥ मातृरमणीतनुभिः कालरात्र्यादिमातृकायोगिनीस्वरूपैः ॥ वृत्तत्रयप्रथितचक्रकतां] वृत्तत्रयचक्रतां ॥ आद्यवस्थाः दशाङ्गयोगावस्थाः ॥ संविन्मया चिद्घननिष्ठाः ॥ सकलधातव: ओजरसासृग्मांसमेदोस्थिमज्जाशुक्राणि ॥ प्रकटयोगिनिकास्वरूपैः सर्वसंक्षोभिणीमुद्रादिब्राह्म्याद्यणिमासिद्ध्यादिप्रकटयोगिनीस्वरूपैः ॥ भूचक्रतां भूपुरतां ॥

## तत्र शास्त्रवचनप्रमाणम्

"अष्टाङ्गपञ्चाङ्गदशाङ्गयोगं सर्वं परायाः परमाद्यवस्थाः ॥" इति
गौरीकञ्चुकीयतन्त्रवचनम् ॥

सर्वावस्थास्वरूपाश्च कालरात्र्यादिमातृकाः ॥
संविन्मयाश्चमुद्रास्युर्धातवोऽप्यष्टमातृकाः ॥
दशाङ्गयोगसंपन्नावस्थाः स्युर्दशसिद्धयः ॥" इति
बृहद्वडवानलतन्त्रवचनम् ॥

॥ ३७ ॥

आधारकानिदशकानि च दिव्यदेव्या-
श्चक्रात्मना परिणतानि भवन्ति शश्वत् ॥
तस्माच्च यन्त्रपरदेवतयोरभेदात्
देव्याः श्रियास्तनुरयं परयन्त्रराजः ॥३८॥

अन्वयः—दिव्यदेव्याः दशकानि आधारकानि शश्वत् चक्रात्मनापरिणतानि भवन्ति ॥ तस्मात् (कारणात्) च यन्त्रपरदेवतयोः अभेदात् अयं परयन्त्रराजः देव्याः श्रियाः तनुः (अस्ति) ॥

व्याख्या—दिव्यदेव्याः श्रियाः ॥ दशकानि आधाराणि मूलाधार-स्वाधिष्ठानमणिपूरकानाहतविशुद्धिलम्बनाज्ञानादबिन्दुब्रह्मरन्ध्राः ॥ चक्रात्मना बिन्दुत्रिकोणाष्टकोणान्तर्दशारबहिर्दशारचतुर्दशाराष्टदलषोडशदलत्रिवृत्तभूपुरात्मना ॥ परयन्त्रराजः श्रीयन्त्रम् ॥

## तत्र शास्त्रवचनप्रमाणम्

"आधारदशकं देव्याः दशचक्रैस्तुभिन्नितम् ॥" इति
वृहद्वडवानलतन्त्रवचनम् ॥

॥ ३८ ॥

शैवाख्यदर्शनमिदं परबैन्दवोत्थम्
श्रीशाक्तदर्शनमथो हुतकोणजातम् ॥
अष्टारकोत्थमपि वैष्णवदर्शनाख्यम्
सौराख्यदर्शनमथो सुदशारकोत्थम् ॥३९॥
वाह्यस्थकोणदशजन्म च वैदिकाख्यम्
सांख्यादिदर्शनमिदं मनुकोणकोत्थम् ॥
श्रीगाणपत्यमतमष्टदलाभिधानम्
श्रीबौद्धदर्शनमुशन्ति कलारभूतम् ॥४०॥
वृत्तत्रयादिह जितेन्द्रियदर्शनञ्च
चार्वाकदर्शनमथो क्षितिचक्रजातम् ॥



श्रीबैन्दवान्तरभवाः कुलकौलधर्म्मा
एवं भवन्ति सकलाः किल शास्त्रमार्गाः ॥४१॥

अन्वयः—इदं शैवाख्यदर्शनं परबैन्दवोत्थं ( उशन्ति ) ॥ अथो श्रीशाक्तदर्शनम् हुतकोणजातं (उशन्ति) ॥ वैष्णवदर्शनाख्यं अपि अष्टारकोत्थं (उशन्ति) अथो सौराख्यदर्शनम् सुदशारकोत्थं ( उशन्ति) ॥ वैदिकाख्यं च वाह्यस्थकोणदशजन्म (उशन्ति) ॥ इदं सांख्यादिदर्शनम् मनुकोणकोत्थं (उशन्ति) ॥ श्रीगाणपत्यमतं अष्टदलाभिधानं ( उशन्ति ) ॥ बौद्धाख्यदर्शणं सुकलारभूतं उशन्ति ॥ इह वृत्तत्रयात् जितेन्द्रियदर्शनं (उशन्ति)॥ अथो चार्वाकदर्शनं क्षितिचक्रजातं (उशन्ति) ॥ कुलकौलधर्म्माः श्रीबैन्दवान्तरभवाः ( सन्ति ) ॥ एवं सकलाः शास्त्रमार्गाः किल भवन्ति ॥

व्याख्या—शैवाख्यदर्शनं शैवदर्शनशास्त्रं ॥ परबैन्दवोत्थं बैन्दवचक्रजनितम् ॥ श्रीशाक्तदर्शनं शाक्तदर्शनशास्त्रं ॥ हुतकोणजातं त्रिकोणचक्रजनितम् ॥ सुदशारकोत्थं अन्तर्दशारचक्रजनितम् ॥ वैदिकाख्यं वैदिकदर्शनशास्त्रं वाह्यस्थकोणदशजन्म वहिर्दशारचक्रजनितम् ॥ सांख्यादिदर्शनं सांख्यमिमांसकन्यायवैषेशिकपातञ्जलवेदान्तादिदर्शनशास्त्रम् ॥ मनुकोणकोत्थं चतुर्दशारचक्रजनितम् ॥ सुकलारभूतं षोडशदलचक्रजनितम् ॥ क्षितिचक्रजातं भूपुरचक्रजनितम् ॥

## तत्र शास्त्रवचनप्रमाणम्

"बैन्दवे परमेचक्रे शैवदर्शनकं यजेत् ।
शाक्तदर्शनकं देवि त्रिकोणेपरिपूजयेत् ॥
वसुकोणे महेशानि यजेद्वैष्णवदर्शनम् ।

अन्तर्दशारचक्रे तु सौरदर्शनकंयजेत् ॥
वहिर्दशारचक्रे च ब्रह्मवैदिकदर्शनम् ।
सांख्यादिदर्शनञ्चैव मनुकोणे प्रपूजयेत् ॥
गाणपत्याह्वयं देवि दर्शनं चाष्टपत्रके ।
वौद्धदर्शनकं चैव षोडशारे प्रपूजयेत् ॥
जितेन्द्रियाभिदंदेवि दर्शनञ्च त्रिवृत्तके ।
चार्वाकदर्शनञ्चैव भूचक्रे परिपूजयेत् ॥
विन्दोरन्तर्गते चक्रे कौलदर्शनमुत्तमम् ॥" इति
रहस्याम्नायत्रिपुरार्चनपद्धतिवचनम् ॥
॥ ३९ ॥ ॥ ४० ॥ ॥ ४१ ॥

**श्रीचक्रराजमयशोभनपीठलीनाम्**
**सिंहासनोपरिगतां मनुराजदेहाम् ॥**
**रक्ताम्बराभरणमाल्यविभूषिताङ्गीम्**
**वालेन्दुमौलिमुकुटां नवयौवनाढ्याम् ॥४२॥**
**कन्दर्पकोटिजयिनीं ललितस्वरूपाम्**
**मन्दस्मितास्यकमलां तरुणार्कभाषाम् ॥**
**सोमाग्निसूर्यनयनत्रयभूषितास्याम्**
**पाशाङ्कुशेक्षवधनुःशरपाणिपद्माम् ॥४३॥**
**ब्रह्माच्युतेमुकुटस्थितरत्नपुञ्जै-**



**रुद्भासितारुणपदाम्बुजयुग्मयुक्ताम् ॥**
**भक्तोपकारकरणाय सयत्नचित्ताम्**
**श्रीमन्महात्रिपुरसुन्दरि नौम्यहं त्वाम् ॥४४॥**

अन्वयः—( हे ) श्रीमन्महात्रिपुरसुन्दरि ! श्रीचक्रराजमयशोभनपीठलीनां सिंहासनोपरिगतां मनुराजदेहाम् रक्ताम्बराभरणमाल्यविभूषिताङ्गीं वालेन्दुमौलिमुकुटां नवयौवनाढ्यां कन्दर्पकोटिजयिनीं ललितस्वरूपां मन्दस्मितास्यकमलां तरुणार्कभासां सोमाग्निसूर्यनयनत्रयभूषितास्यां पाशाङ्कुशेक्षवधनुःशरपाणिपद्मां ब्रह्माच्युतेशमुकुटस्थितरत्नपुञ्जैरुद्भासितारुणपदाम्बुजयुग्मयुक्ताम् भक्तोपकारकरणाय सयत्नचित्तां त्वां अहं नौमि ॥

व्याख्या—पाशः पक्षः अङ्कुशः शृणिः इक्षवधनुः इक्षुचापः शराः पञ्चवाणाः तैः उद्यतानि युक्तानि पाणिपद्मानि हस्तकमलानि यस्याः सा ताम् ॥ ब्रह्मा पद्मयोनिः अच्युतः विष्णुः ईशः सदाशिवः तेषां मुकुटानि उष्णिषाः तेषु स्थिताः रत्नानां मणीनां पुञ्जाः तेजांसि तैः उद्भासितं प्रकाशितं अरुणं रक्तं पादाम्बुजयुग्मं चरणकमलयुगलम् यस्याः सा ताम् ॥

## तत्र शास्त्रवचनप्रमाणम्

"वालार्क मण्डलाभासां चतुर्वाहुं त्रिलोचनाम् ।
पाशाङ्कुशधनुर्वाणधारयन्तीं शिवां भजे ॥" इति
ज्ञानार्णवतन्त्रवचनम् ॥

"पाशंचाङ्कुशमिक्षुनिर्मितधनुर्वाणान् च संविभ्रतीम् ॥" इति
गौरीकञ्चुकीयतन्त्रसुन्दरीयपटलवचनम् ॥

"ब्रह्मविष्णुशिरोरत्न निघृष्टचरणाम्बुजाम् ॥" इति
सौभाग्यरत्नाकरवचनम् ॥

"सप्तकोटिमहामन्त्ररूपिणीं त्रिपुराम्बिकाम् ॥ इति
बृहद्वडवानलतन्त्रवचनम् ॥

॥४२॥ ॥४३॥ ॥४४॥

पूर्णानन्दं गुरुञ्च त्रिपुरहरवधूं श्रीगुरुं भैरवाख्यम्
नत्वाहं मन्दबुद्धिर्भगवति धनशम्शेरवर्मा सुतस्ते ॥
एतत्स्तोत्रं त्वदीयं किलविरचितवान् त्वत्प्रसादार्थसिद्ध्यै
क्षन्तव्यः कामरूपे जननि तव सुतस्यापराधो-
ऽखिलो मे ॥४५॥

अन्वयः—(हे) भगवति! पूर्णानन्दं गुरुं (च) त्रिपुरहरवधूं (च) श्रीगुरुं च नत्वा ते सुतः मन्दबुद्धिः धनशम्शेरवर्मा अहं त्वत्प्रसादार्थसिद्ध्यै: भैरवाख्यं एतत् त्वदीयं स्तोत्रं विरचितवान् ॥ (तस्मात्कारणात्) (हे) कामरूपे जननि! तवसुतस्य मे अखिलः अपराधः (त्वया) क्षन्तव्यः ॥

व्याख्या—त्रिपुरहरवधूं भुवनेश्वरीम् ॥ कामरूपे कामकलात्मिके ॥

॥ ४५ ॥

इतिश्रीधनशम्शेरवर्म्मणाविरचितं मङ्गलाचरणमन्वयव्याख्याशास्त्रवचनप्रमाणसहितं श्रीपराविभूतिस्तोत्रम् सम्पूर्णम् ॥

॥ शुभम् ॥